अपि दयावति कस्यचित् कष्टां दशां शृण्वति सति अनिच्छया किमनेनेति करं प्रसार्य वारयति । यद्वा—अनास्थया संसारानित्यतयाभिनयवशात्करं प्रसारयतीति । वने पिकाः कूजन्ति भृङ्गा हुंकारं कुर्वन्ति करुणपुष्पाणि विकसन्ति कमलानि चोन्मीलन्ति । एतच्च दृष्ट्वा विरहिणो व्यथन्ते इति भावः । किमिदं वनं शृणोति दुःखवार्तामितीव पुष्पविकासव्याजेन करं प्रसारयन्तीति वार्थः । आस्था इत्यत्र 'आतश्चोपसर्गे' इत्यङ् । दून इति दीर्घाद्दूङः स्वादि(त्वेनौदि-)त्वान्निष्ठानः । करुणो वृक्षः पक्षे करुणा दया ॥

**रसालसालः समदृश्यतामुना स्फुरद्द्विरेफारवरोषहुंकृतिः ।**
**समीरलोलैर्मुकुलैर्वियोगिने जनाय दित्सन्निव तर्जनाभियम् ॥८९॥**

रसालेति ॥ अमुना नलेन रसाल आम्रलक्षणः सालो वृक्षः समदृश्यत दृष्टः । किंभूतः—स्फुरन्तो भ्रमन्तो द्विरेफा भ्रमरास्तेषामारव एव रोषहुंकृतिः क्रोधहुंकारो यस्य । किंकुर्वन्निव—समीरेण वायुना लोलैर्मुकुलैः कृत्वा वियोगिने विरहिणे जनाय तर्जनाया भर्त्सनाया भीर्भयं तां दित्सन्निव दातुमिच्छन्निव । अन्योऽपि हुंकृत्य बलेनाङ्गुल्यादिना तर्जयति । रसालशब्दस्तत्पुष्पे वर्तते । दित्सन्निति ददातेः सनि द्विर्वचनम् 'सनि मीमा-' इतीस् 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः 'सः स्यार्धधातुके' इति तः । 'भयभीत-' इत्यादि वक्तव्यात्तर्जनाभियमिति समासः[3] ॥

**दिनेदिने त्वं तनुरेधि रेऽधिकं पुनःपुनर्मूर्छ च तापमृच्छ च ।**
**इतीव पान्थाञ्शपतः पिकान्द्विजान्सखेदमैक्षिष्ट स लोहितेक्षणान् ॥**

दिनेदिन इति ॥ स नलः पिकान् द्विजान्पक्षिणः ब्राह्मणांश्च सखेदं सोद्वेगमैक्षिष्ट ददर्श । किंभूतानिव—इति पूर्वोक्तप्रकारेण पान्थाञ्जनाञ्शपत इव पान्थेभ्यः शापं ददत इव । यतो लोहितेक्षणान्मत्तत्वाद्रक्तनेत्रान् । इतीति किम्—रे पान्थ, त्वं दिनेदिने अधिकं भृशं तनुः कृश एधि भव, पुनस्त्वं मूर्छ मूर्छां प्राप्नुहि । तथा त्वं तापं सर्वाङ्गतापमृच्छ लभस्व च । पिकः स्वभावाद्रक्तलोचनः । पिकशब्दं श्रुत्वा पान्थानां मूर्छा तापश्च भवति । क्रुद्धा ब्राह्मणा अपि रक्तनेत्राः सन्तः शापं ददते । रे इत्यनादरेऽव्ययम् । एधि । अस्तेर्लोटि हेः 'हुझल्भ्यो हेः-' इति धौ 'घ्वसोरेद्धौ-' इत्येत्वे 'श्नसोः-' इत्यल्लोपश्च । ऋच्छ इत्यत्रैहौ 'पाघ्रा-' इत्यादिना ऋच्छादेशे 'अतो हेः' इति हेर्लुक् । ऋच्छेर्वा । पान्थान्नित्यं पन्थानं गच्छन्तीत्यर्थे 'पन्थो ण नित्यम्' इति णः, पन्थादेशश्च । शीप्स्यमानत्वाभावात्पान्थानिति द्वितीया । उपालम्भाभावाच्च 'शपतः' इति तङ्भावः ॥

**अलिस्रजा कुड्मलमुच्चशेखरं निपीय चाम्पेयमधीरया धिया ।**
**स धूमकेतुं विपदे वियोगिनामुदीतमातङ्कितवानशङ्कत ॥ ९१ ॥**

---

१ 'ल्वादिभ्यश्च' इति निष्ठानत्वम् इति मल्लिनाथस्य तु प्रमाद एव । दूङो ल्वादित्वाभावात् । २ 'अत्र समासोक्तिरूपकप्रतीयमानोत्प्रेक्षालंकारः' इति **साहित्यविद्याधरी** । ३ 'अत्रानुप्रासोत्प्रेक्षालंकारौ' इति **साहित्यविद्याधरी** । 'द्विरेफेत्यादिरूपकोत्थापितेयं तर्जनाभयजननोत्प्रेक्षेति संकरः' इति **जीवातुः** ।

अलीति ॥ स नलः चाम्पेयं कुड्मलमधीरया धिया बुद्ध्या निपीय सादरमालोक्य आतङ्कितवान् चकितः सन् वियोगिनां विपदे विनाशायोदीतमुदयं प्राप्तं तमेव धूमकेतुमुत्पातविशेषमशङ्कत तर्कितवान् । धूमकेतुर्विनाशसूचकः । किंभूतं कुड्मलम्—अलिस्रजा भ्रमरपङ्क्त्योच्चशेखरमुच्चाग्रम् । 'चाम्पेयश्चम्पको हेमपुष्पकः' इत्यमरः । ततो विकारप्रत्ययस्य 'पुष्प-' इति लुक् । कुड्मलमिति 'कलस्तृपश्च' इत्यतः कलप्रत्ययमनुवर्त्य 'कुटिकशिकौतिभ्यः प्रत्ययस्य मुट्' इति कले तस्य मुडागमे 'कुट कौटिल्ये' इत्यस्य धातोः 'कुट्मलः' टमध्योऽयम् । 'कुड बाल्ये' इत्यस्य 'कुड्मलः' डमध्योऽपि । तथाच मेदिनीकोषः—'कुड्मलो मुकुले पुंसि न द्वयोर्नरकान्तरे' इति ॥

**गलत्परागं भ्रमिभङ्गिभिः पतत्प्रसक्तभृङ्गावलि नागकेसरम् ।**
**स मारनाराचनिघर्षणस्खलज्ज्वलत्कणं शाणमिव व्यलोकयत् ॥ ९२ ॥**

गलदिति ॥ स नलो नागकेसरं नागकेसरकुसुमं शाणमिव निकषमिव कषणपाषाणमिव व्यलोकयत् । कीदृशम्—गलत्परागं भ्रश्यत्परागम् । तथा भ्रमिभङ्गिभिर्भ्रमणरचनाविशेषैः पतन्ती वृक्षादागच्छन्ती प्रसक्ता लग्ना भृङ्गावलिर्भ्रमरपङ्क्तिर्यस्मिन् । किंभूतं शाणम्—मारस्य कामस्य नाराचा बाणशल्यानि तेषां निघर्षणात्स्खलन्तो भ्रश्यन्तो ज्वलन्तो देदीप्यमानाः कणाः स्फुलिङ्गा यस्मात् । परागो ज्वलत्पतत्कणस्थाने । भृङ्गावलिर्नाराचस्थाने । शाणस्यापि भ्रमणं भवति । लोहसंघर्षाज्ज्वलन्तः कणाश्च तस्मादुच्छलन्ति । 'शाणस्तु निकषः कषः' इत्यमरः ॥

**तदङ्गमुद्दिश्य सुगन्धि पातुकाः शिलीमुखालीः कुसुमाद्गुणस्पृशः ।**
**स्वचापदुर्निर्गतमार्गणभ्रमात्स्मरः स्वनन्तीरवलोक्य लज्जितः ॥ ९३ ॥**

तदिति ॥ स्मरः कामः शिलीमुखालीर्भ्रमरपङ्क्तीरवलोक्य स्वचापात्स्वधनुषः दुर्निर्गता दुःखेन निर्गता मार्गणा बाणास्तेषां भ्रमाद्भ्रान्तेः लज्जितो लज्जां प्राप्त इव (लुप्तोत्प्रेक्षा) । किंभूताः शिलीमुखालीः—कुसुमादपि सुगन्धि तदङ्गं नलाङ्गमुद्दिश्य पातुकाः पतनशीला आगच्छन्तीः । यद्वा—कुसुमात्सकाशात्पातुकाः । यद्वा—कुसुमगुणबद्धात्कुसुमलक्षणाद्धनुषः पातुकाः । यतो गुणस्पृशो गुणाभिलाषिणीः, मौर्वीस्पृशश्च । स्वनन्तीः शब्दायमानाः । शिलीमुखपदं भ्रान्तेः कारणम् । 'अलिबाणौ शिलीमुखौ' इत्यमरः । दुर्निर्गतो हि बाणो ध्वनति लक्ष्यं च न स्पृशति तेन धानुष्को लज्जते । सुगन्धीति सुपूर्वस्य 'गन्धस्येत्–' इतीत्त्वम् । पातुकाः तच्छीले 'लषपत–' इत्युकञ् ॥

**मरुल्ललत्पल्लवकण्टकैः क्षतं समुच्छलच्चन्दनसारसौरभम् ।**
**स वारनारीकुचसंचितोपमं ददर्श मालूरफलं पचेलिमम् ॥ ९४ ॥**

---

१ 'अत्रोत्प्रेक्षालंकारः' इति जीवातुसाहित्यविद्याधर्यौ । २ 'अत्रोत्प्रेक्षा जातिश्चालंकारः' इति साहित्यविद्याधरी । ३ 'अत्र स्वनच्छिलीमुखेषु दुर्निर्गतमार्गणभ्रमाद् भ्रान्तिरलंकारः स च शिलीमुखेति श्लेषानुप्राणिता चेयं स्मरस्य लज्जितत्वोत्प्रेक्षा इत्यनयोः संकरः' इति जीवातुः ।

मरुदिति ॥ स नलः पचेलिमं पक्वं मालूरफलं बिल्वफलं ददर्श । किंभूतम्—मरुता ललन्तो विलसन्तो ये पल्लवाः शाखाग्राणि तेषां कण्टकैः क्षतम् । मरुद् देवः, तद्वल्ललन्विलासं कुर्वन्त्यः पल्लवो विटस्तस्य कण्टकाः कण्टकवत्तीक्ष्णा नखास्तैः क्षतम् । अथ च—तस्य पल्लव इव पल्लवः पाणिः, तस्य कण्टकैर्नखैरिति छायार्थः । तथा समुच्छलदुद्गच्छच्चन्दनवत्सारं श्रेष्ठं सौगन्ध्यं यस्मात् । चन्दनस्य सारं सौगन्ध्यं यस्मादिति च । सारशब्देन घनसारः कर्पूरो लक्षणया, श्रीखण्डयुक्तः सार इति वा । अत एव वारनारी गणिका तस्याः कुचौ ताभ्यां संचिता तुल्या, अर्जिता वा उपमा सादृश्यं यस्य । गणिकास्तनतुल्यशोभं वा । कुलस्त्रीकुचे नखक्षतादिप्राकट्योक्तेरनौचित्यमिति 'वार'इति पदम् । 'बिल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलौ' इत्यमरः । ललतिरुभयपदी । 'इगन्ताच्च लघुपूर्वात्' इति भावेऽण् । कर्मकर्तरि केलिमर उपसंख्यानात्पचेलिमम्[1] ॥

**युवद्वयीचित्तनिमज्जनोचितप्रसूनशून्येतरगर्भगह्वरम् ।**
**स्मरेषुधीकृत्य धिया भयान्धया स पाटलायाः स्तवकं प्रकम्पितः ९५**

युवेति ॥ स नलो भयान्धया भयभ्रान्तया धिया बुद्ध्या पाटलायाः स्तबकं गुच्छं स्मरेषुधीकृत्य तूणीरीकृत्य प्रकम्पितश्चकितः । किंभूतं गुच्छम्—युवद्वयी स्त्रीपुंसद्वयी तस्याश्चित्ते वेध्येऽन्तःकरणे तयोर्मध्ये निमज्जनं ब्रुडनं तस्मिन्नुचितानि योग्यानि प्रसूनानि पुष्पाणि तैः शून्येतरं पूर्णं गर्भगह्वरं मध्यबिलं यस्य । एतत्पाटलागुच्छं न भवति, किंतु कामस्य शस्त्रमिति बुद्ध्या कम्पित इत्यर्थः[3] ॥

**मुनिद्रुमः कोरकितः शितिद्युतिर्वनेऽमुनामन्यत सिंहिकासुतः ।**
**तमिस्रपक्षत्रुटिकूटभक्षितं कलाकलापं किल वैधवं वमन् ॥ ९६ ॥**

मुनीति ॥ अमुना नलेन वने कोरकितः शितिः कृष्णा द्युतिर्यस्य स मुनिद्रुमोऽगस्त्यवृक्षः सिंहिकासुतो राहुरिवामन्यत ज्ञात इति लुप्तोत्प्रेक्षा । किल इवार्थे वा । किंभूतो राहुः—तमिस्रपक्षेऽन्धकारपक्षे या त्रुटिश्चन्द्रस्य कलाविच्छेदः सैव कूटं व्याजस्तेन भक्षितं गिलितं वैधवं विधुश्चन्द्रः, तत्संबन्धिनं कलाकलापं कलासमूहं वमन्नुद्गिरन् । मुनिपदं शान्तिसंभावनाद्वधनिवृत्तिसंभावनार्थम् । श्यामवर्णत्वाद्राहुत्वम् । श्यामवृत्तस्य कलिकानां शुभ्रत्वादाकारसाम्याच्च चन्द्रकलात्वम् । चन्द्राद्भयमनेन व्यज्यते । कोरकाः संजाता अस्य । तारकादित्वादितच् । अथ च सिंहिकापुत्रः सिंहः शितिद्युतिर्धवलवर्णः भक्षितं श्वापदाद्युद्गिरन् वनेऽमन्यत अयं सिंह इति । तद्दर्शनाद्यथा भयं भवति तथा विरहिणोऽस्यागस्त्यदर्शनाज्जातमिति भावः । 'शिती धवलमेचकौ' इत्यमरः[4] ॥

---

१ 'कर्मकर्तरि चायं कैश्चिदिष्यते, भाष्यकारेण तु कर्मणि प्रदर्शितः' इति कैयटः । २ 'अत्रोपमालंकारः' इति **साहित्यविद्याधरी** । ३ 'अत्रानुप्रासे रूपकालंकारः' इति **साहित्यविद्याधरी** । 'अत्र पाटलस्तबके मदनतूणीरभ्रमाद्भ्रान्तिमदलंकारः । 'कविसंमतसादृश्याद्विषये विहितात्मनि । आरोप्यमाणानुभवो यत्र स भ्रान्तिमान्मतः ॥' इति लक्षणात्' इति **जीवातुः** । ४ 'अत्रोत्प्रेक्षारूपकापह्नुतिश्लेषालंकारसंकरः' इति **साहित्यविद्याधरी** ।

पुरा[1] हठाक्षिप्ततुषारपाण्डुरच्छदा वृतेर्वीरुधि बद्धविभ्रमाः ।
मिलन्निमीलं ससृजुर्विलोकिता नभस्वतस्तं कुसुमेषु केलयः ॥९७॥

पुरेति ॥ कुसुमेषु पुष्पेषु नभस्वतो वायोः केलयः क्रीडा विलोकिताः सत्यः तं नलं मिलन्निमीलं कृतनेत्रसंकोचं ससृजुश्चक्रुः । किंभूताः—पुरा आदौ हठेन बलात्कारेण आक्षिप्ताश्चालितास्तुषारेण हिमेन पाण्डुराश्छदाः पत्राणि याभिस्ताः । तथा—वृतेः आवरणस्य संबन्धिन्यां वीरुधि लतायां बद्धविभ्रमाः कृतविशिष्टभ्रमाः कृतपक्षिभ्रमणा वा । छदलक्षणमावरणमाक्षिप्तं येनेति वायुविशेषणं वा । तिर्यगादिसंभोगावलोकनसुखादिवशात्कृतनेत्रसंकोचमित्यर्थः । विरहित्वादसह्यत्वाद्वा परसंभोगदर्शनस्यानुचितत्वाद्वा मिलन्ती निमीला नेत्रव्यापारो यस्य । वीरुधि स्त्रीलिङ्गत्वाद्योषिति नभस्वतः पुंलिङ्गत्वान्नायकस्य कुसुमेषुकेलयः कामक्रीडाः । 'नेक्षेतार्कं न नग्नां स्त्रीं न च संसक्तमैथुनाम्' इति याज्ञवल्क्यनिषेधात् ॥

गता यदुत्सङ्गतले विशालतां द्रुमाः शिरोभिः फलगौरवेण ताम् ।
कथं न धात्रीमतिमात्रनामितैः स वन्दमानानभिनन्दति स्म तान् ॥

गता इति ॥ स नलः फलगौरवेण फलबाहुल्येन पुण्यजन्यफलाधिक्येन च अतिमात्रमतिशयेन नामितैर्नम्रितैः शिरोभिरग्रभागैर्मस्तकैश्च तां धात्रीं पृथ्वीम्, उपमातरं च वन्दमानान्स्पृशतो, नमस्कारं कुर्वतश्च तान्द्रुमान्, सुतांश्च कथं नाभिनन्दति स्म प्रीत्या कथं नास्तौषीत् । कांस्तान्—ये द्रुमा यस्या धात्र्या उत्सङ्गतल उपरिप्रदेशे अथवाङ्कस्थले विशालतां वृद्धिं गताः प्राप्ताः । ते हि युक्तकारिणः स्तोतुमुचिता आसन् । फलभरनम्रा हि वृक्षाः स्तोतव्या एव । विरहित्वादभिनन्दति स्म, किंतु न इति काकुर्वा । वियोगतप्ताय तस्मै स्मरोपकरणहेतवः पुष्पवृक्षा इव फलवृक्षा अपि न रुरुचिरे इति भावः । यतः—'दुःखिते मनसि सर्वमसह्यम्' इति भारविः । 'धात्री स्यादुपमातापि क्षितिरप्यामलक्यपि' इत्यमरः । दधति याम्, धयन्ति यामिति धात्री 'धः कर्मणि ष्ट्रन्' इति ष्ट्रनि ङीष् । नामितैरिति 'ज्वलह्वल—' इति पाक्षिकं मित्त्वम्[2] ॥

नृपाय तस्मै हिमितं वनानिलैः सुधीकृतं पुष्परसैरहर्महः ।
विनिर्मितं केतकरेणुभिः सितं वियोगिनेऽदत्त न कौमुदीमुदः॥९९॥

नृपेति ॥ अहर्महः अह्नो दिवसस्य महस्तेजः तस्मै वियोगिने नृपाय कौमुदीमुदश्चन्द्रिकाजनितान्संतोषान्नादत्त । किंभूतमहर्महः—वनानिलैरुद्यानवायुभिर्हिमितं हिमीकृतम् । पुष्परसैर्मकरन्दैः सुधीकृतममृतीकृतम् । केतकरेणुभिः केतकीकुसुमपरागैः सितं श्वेतं विनिर्मितं कृतम् । चन्द्रिकातुल्यमपि दिवसे तेजोविरहित्वात्तस्य चन्द्रिका

---

१ 'पुरो' इति वा पाठः । 'अग्रतः' इति व्याख्यातं साहित्यविद्याधर्याम् । २ 'अत्र प्रस्तुतनभस्वद्विशेषणसामर्थ्यादप्रस्तुतकामुकविरहप्रतीतेः समासोक्तिरलंकारः' इति जीवातुः । ३ 'अत्रापि विशेषणसामर्थ्यात्पुत्रप्रतीतेः समासोक्तिरलंकारः' इति जीवातुः ।

दुःखदायिनी इति। दुःखदं जातमित्यर्थः। अहर्महः कौमुदीति व्यस्तरूपकम्, तस्मै मुदो नादत्त इति वा। शैत्यादिगुणयोगादहर्महस्तस्मै मुदोऽदत्त, न कौमुदीति वा। शैत्यादिगुणयोगेन दिवसतेजः सुखान्तरं ददौ, कौमुदी मुदो न ददाविति वा। दिवसतेजः कौमुदीजन्यहर्षान्नादत्त किम्। अपि तु ददावेवेति वा। अहर्मह इति 'रोऽसुपि' इति रेफः॥

अयोगभाजोऽपि[2] नृपस्य पश्यता तदेव साक्षादमृतांशुमाननम्।
पिकेन रोषारुणचक्षुषा मुहुः कुहूरुताहूयत चन्द्रवैरिणी॥ १००॥

अयोगेति॥ अयोगभाजोऽपि विरहिणोऽपि नृपस्य नलस्य तत्प्रसिद्धमाननं मुखं साक्षादबाधितत्वेन अमृतांशुं चन्द्रमेव पश्यता पिकेन कोकिलेन चन्द्रवैरिण्यमावस्या मुहुराहूयताकारिता। किंभूतेन पिकेन—अनेन मुखेन विरहित्वान्म्लानेन भवितव्यं, तदधुनापि न म्लायतीति रोषेण क्रोधेन अरुणे रक्ते चक्षुषी यस्य। तथा–कुहूः कुहूः इति रुत् शब्दो यस्य। कुहूः इति रौतीति वा। कुहूः इति रुत् शब्दस्तयामावास्या आकारिता। उत इति निश्चये, किंत्वर्थे वा। चन्द्रवैरिणी कुहूरिति वा योजना। विरहेऽपि चन्द्राधिक्यं मुखस्य। तदेव पाण्डुतादिगुणोपेतमेवेति वा। 'कुहूः स्यात्कोकिलालापनष्टेन्दुकलयोरपि' इति विश्वः। पिकस्य नेत्रे स्वभावेनैव रक्ते, शब्दश्च कुहूरिति। तत्रैतत्सर्वमुत्प्रेक्षितम्[3]॥

अशोकमर्थान्वितनामताशयागताञ्शरण्यं गृहशोचिनोऽध्वगान्।
अमन्यतावन्तमिवैष पल्लवैः प्रतीष्टकामज्वलदस्त्रजालकम्॥१०१॥

अशोकेति॥ एष नलोऽशोकं वृक्षमेवंभूतमिवामन्यत। अर्थेन 'यत्सेवया शोको न भवति' इत्येवंरूपेणान्वितमन्वर्थं नाम यस्य तस्य भावोऽर्थान्वितनामता तस्यामाशयाभिलाषेणागतान्प्राप्तान्गृहशोचिनः स्त्रीशोचिनोऽध्वगान्पान्थानवन्तमिवामन्यत' इत्यन्वयः। पुनः किंभूतम्—पल्लवैः शाखाग्रैः कृत्वा प्रतीष्टमङ्गीकृतं कामस्य ज्वलत् आरक्तमस्त्रजालकमस्त्रसमूहो येन, अस्त्ररूपाणि जालकानि कलिका येनेति वा। यतः—शरण्यं शरणे रक्षणे साधुम्। अन्योऽपि शरण्योऽरिशस्त्राणि स्वाङ्गे गृह्णञ्शरणागतान्रक्षति। पल्लवैरवन्तमिति वा। कामस्य ज्वलदस्त्रजालकमाग्नेयास्त्रकाण्डं येनेति वा। अर्थान्वितनामताशया शरणागतान्पान्थानवन्तं मारयन्तमिति वामन्यत। अवन्तं मारणार्थमेवेति तात्पर्यम्। यतः शरणे मारणे साधुं समर्थम्। पथिकानां कामास्त्रेभ्यो भयम्, तानि तु पुष्पान्तराद्दारुणान्यत्रैव विद्यन्ते। ततश्च 'कामशस्त्राणि स्वहस्ते गृहीत्वायमेव मारयति' इति प्रकृतौपयिकत्वादयमेवार्थः साधीयान्। रक्तान्यशोकपुष्पाणि दृष्ट्वा पान्था व्यथन्ते इत्यर्थः। 'शरणं वधरक्षित्रोः शरणं रक्षणे गृहे' 'गृहाः पत्न्यां गृहे स्मृताः' इति विश्वः।

---

१ 'अत्रोपमालंकारः। वनानिलादिषु सुखकारणेषु सत्सु सुखकार्यानुत्पत्तेरुक्तनिमित्तविशेषोक्तिरलंकारः' इति साहित्यविद्याधरी। २ 'वियोग-' इति पाठो जीवातुसंमतः। ३ 'अत्रोत्प्रेक्षा रूपकालंकारः' इति साहित्यविद्याधरी। अत्रोत्प्रेक्षा श्लिष्टरूपकसापेक्षेति संकरः' इति जीवातुः।

'क्षारको जालकं क्लीबे कलिका कोरकः पुमान्' इत्यमरः। शरणे साधुरिति 'तत्र साधुः' इति यत्। अध्वगान् 'अन्तात्यन्ताध्व–' इति डः॥

**विलासवापीतटवीचिवादनात्पिकालिगीतेः शिखिलास्यलाघवात्।**
**वनेऽपि तौर्यत्रिकमारराध तं क्व भोगमाप्नोति न भाग्यभाग्जनः॥१०२**

विलासेति॥ तौर्यत्रिकं नृत्यगीतवाद्यरूपं कर्तृ वनेऽपि तं नलमारराध सेवते स्म। कस्मात्—विलासार्थं क्रीडार्थं वापी दीर्घिका तस्यास्तटे तीरे वीचिवादनात्तरङ्गनादात्। तथा पिकाः कोकिला अलिनो भ्रमरास्तेषां गीतेर्गानात्। पिकानामालिः पङ्क्तिर्वा। तथा शिखिनां मयूराणां लास्यं नृत्यं तस्य लाघवाच्चातुर्यात्। अत्रार्थान्तरं न्यस्यन्नाह—क्वेति, भाग्यभाग्दैवयुक्तो जनः पुरुषः क्व कस्मिन्स्थाने भोगं सुखं सुखसाधनं वा नाप्नोति, अपितु सर्वत्रापि प्राप्नोति। विरहिणस्तौर्यत्रिकं सुखाय न, तथापि मयूरादीनां सेवाव्यापारो दर्शितः। नलस्य तु न तत्स्वीकारः। भुज्यत इति भोग इति तेषां वास्तवी निरुक्तिरस्त्येव नलस्य सा तदा नास्तीति चेत्। माभूत्, तथापि भोग एव। यथा नीरागजनसमीपस्था युवतिर्युवतिरेव। आ खेदे। तौर्यत्रिकं तं पुरवद्वनेऽपि रराध हिंसितवान्। भाग्यभाक् शुभाशुभकर्मभाक् सुखदुःखान्यतरसाक्षात्कारलक्षणं भोगं कुत्र नाप्नोति, अपि तु सर्वत्रापि। यो हि सुखी स स्थानान्तरेऽपि सुखं प्राप्नोति, यस्तु दुःखी स स्थानान्तरे गतोऽपि दुःख्येवेति वा। सुखिनस्तस्य वनेऽपि सुखप्रतिपादनं प्रसङ्गकृतम्। 'भाग्यं शुभात्मकविधौ स्याच्छुभाशुभकर्मणि' इति विश्वः। अलीतीन्नन्तः। इकारान्तत्वे घ्यन्तत्वात्पूर्वनिपातः स्यात्॥

**तदर्थमध्याप्य जनेन तद्वने शुका विमुक्ताः पटवस्तमस्तुवन्।**
**स्वरामृतेनोपजगुश्च सारिकास्तथैव तत्पौरुषगायनीकृताः॥१०३॥**

तदर्थमिति॥ जनेन लोकेन तदर्थं नलस्तुत्यर्थमेवाध्याप्य पाठयित्वा तद्वने नलोद्याने विमुक्ताः पटवः स्फुटवाचः शुकास्तं नलमस्तुवन्। तथैव तेनैव प्रकारेण तद्विमुक्ताः स्फुटवाचः सारिका अपि स्वरामृतेन तं नलमुपजगुस्तुष्टुवुः। किंभूताः—तस्य पौरुषं पराक्रमः तस्य गायना गायन्यश्च कृता गायनीकृताः। जनेनेति शेषः। उभयोर्विशेषणम्। सारिकाणामेव वा। अनेन स्तुतिविरदावलीपाठकाः सूचिताः। अध्याप्येति 'क्रीङ्जीनां णौ' इत्यात्वम्। गायनीत्यत्र 'ण्युट् च' इति ण्युट्। ततश्च्विः॥

**इतीष्टगन्धाढ्यमटन्नसौ वनं पिकोपगीतोऽपि शुकस्तुतोऽपि च।**
**अविन्दतामोदभरं बहिश्चरं विदर्भसुभ्रूविरहेण नान्तरम्॥ १०४॥**

---

१ 'अत्र सापह्नवोत्प्रेक्षालंकारः' इति साहित्यविद्याधरी। २ 'सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः' इति जीवातुः। ३—'ल्युट् च' इति ल्युट् इति पाठान्तरमसंगतमेव। ४ 'अत्र जातिरलंकारः' इति साहित्यविद्याधरी।

इतीति ॥ असौ नलः इति पूर्वोक्तप्रकारेण वनमटन्परिभ्रमन्सन् बहिश्चरं बाह्यमामोदभरं सौरभातिशयमविन्दत प्राप । विदर्भसुभ्रूर्भैमी तस्या विरहेणान्तरमामोदभरं हर्षातिशयं न लेभे । 'बहिः परम्' इति क्वचित्पाठः । तत्र परं केवलम् । किंभूतं वनम्—इष्टगन्धाढ्यमिष्टेनाभीष्टेन गन्धेन सौरभेणाढ्यं समृद्धम् । किंभूतोऽसौ—पिकोपगीतोऽपि । तथा—शुकस्तुतोऽपि । 'आमोदो हर्षगन्धयोः' इति विश्वः ॥

**करेण मीनं निजकेतनं दधद्द्रुमालवालाम्बुनिवेशशङ्कया ।**
**व्यतर्कि सर्वर्तुघने वने मधुं स मित्रमत्रानुसरन्निव स्मरः ॥ १०५ ॥**

करेणेति ॥ स नलः स्मर इव व्यतर्कि । लोकैरिति शेषः । किंभूतः स्मरः—सर्वे च ते ऋतवश्च सर्वर्तवस्तैर्घने संपूर्णेऽत्रास्मिन्वने मित्रं सहायं मधुं वसन्तमनुसरन्मृगयमाणः। निजकेतनं चक्रवर्तिचिह्नं ध्वजरूपं मीनं लक्षणभूतरेखारूपमत्स्यं द्रुमाणामालवालेष्वम्बु तस्मिन्निवेशशङ्कया करेण दधत् धारयन् । दधदिति 'नाभ्यस्तात्–' इति नुन्निषेधः । आलूयते खन्यत इत्यालवालम् । औणादिक आलच्प्रत्ययः[१] ॥

**लताबलालास्यकलागुरुस्तरुप्रसूनगन्धोत्करपश्यतोहरः ।**
**असेवतामुं मधुगन्धवारिणि प्रणीतलीलाप्लवनो वनानिलः ॥१०६॥**

लतेति ॥ वनानिलोऽमुं नलमसेवत । किंभूतः—लतारूपा अबलास्तासां लास्यकला नृत्यविद्या तस्या गुरुरध्यापकः । तथा—तरूणां प्रसूनानि पुष्पाणि तेषां गन्धोत्करस्य गन्धसमूहस्य पश्यतोहरश्चौरः । तथा—मधु पुष्परसस्तल्लक्षणे गन्धवारिणि गन्धोदके प्रणीतं कृतं लीलाप्लवनं जलक्रीडा येन । मधुगन्धाख्यं नलसर इति केचित् । क्रमेण विशेषणत्रयेण मन्दत्वसुगन्धत्वशीतलत्वानि सूच्यन्ते । एवंविधो वायुः कार्यसिद्धेः सूचकः । अन्योऽप्येवंविधः पीठमर्दादिभिः परिचारको नायकं सेवते । पश्यतोहर इति 'षष्ठी चानादरे' इति षष्ठ्या 'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु' इत्यलुक्[३] ॥

**अथ स्वमादाय भयेन मन्थनाच्चिरत्नरत्नाधिकमुच्चितं चिरात् ।**
**निलीय तस्मिन्निव सन्नपांनिधिर्वने तडाको ददृशेऽवनीभुजा १०७**

अथेति ॥ अथानन्तरमवनीभुजा राज्ञा नलेन स तडागोऽपांनिधिरिव समुद्र इव ददृशे । लुप्तोत्प्रेक्षा । किंभूतः—चिराद्बहुकालेनोच्चितं वृद्धिं प्रापितम्, तथा—चिरत्नैश्चिरंतनै रत्नैरैरावतादिभिरधिकम् । पूर्वं तान्यसहायान्येवासन्, इदानीं तु तान्येव बहूनि जातानि तेभ्योऽधिकं वा । स्वं धनं मन्थनाद्भयेनादाय गृहीत्वा तस्मिन्वने निलीय तडागरूपेणैव तिरोहितीभूय निवसन् । समुद्रोपमयोदकबाहुल्यं व्यज्यते । तस्मिन्वने सन् विद्यमान इति पक्षे साक्षादुत्प्रेक्षा । अन्योऽपि धनी राजादिपीडनाद्भयेन सर्वस्वं

१ 'अत्रोक्तनिमित्तविशेषोक्तिरलंकारः' इति साहित्यविद्याधरी । २ 'असौ मीनः पानीये प्रवेक्ष्यतीति शङ्कया' इति सुखावबोधा । ३ 'अत्रानुप्रासोत्प्रेक्षालंकारौ' इति साहित्यविद्याधरी । ४ 'अत्रानुप्रासरूपकालंकारः' इति साहित्यविद्याधरी ।

गृहीत्वा निरुपद्रवे देशान्तरे गुप्तो वसति। 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमरः। तडाक इति 'तड आघाते' इत्यस्मात् 'पिनाकादयश्च' इत्युणादिसूत्रेणाकप्रत्यये सिद्धम्। मन्थनादिति 'भीत्रा–' इत्यपादानत्वम्। चिरत्न इति 'चिरपरुत्परारिभ्यस्त्नो वक्तव्यः' इति त्नः॥

समुद्रधर्मानाह। अग्रे पयोधिलक्ष्मीमुषि इति तडागविशेषणात्तदेव पयोधिलक्ष्मीमुट्त्वमाहाष्टभिः—

**पयोनिलीनाभ्रमुकामुकावलीरदाननन्तोरगपुच्छसुच्छवीन्।**
**जलार्धरुद्धस्य तटान्तभूभिदो मृणालजालस्य मिषाद्बभार यः १०८**

पय इति॥ स कः—यस्तडागो मृणालजालस्य बिससमूहस्य मिषाद्व्याजात्पयसि निलीना मग्ना अभ्रमुकामुका ऐरावतास्तेषामावली समूहस्तस्या रदान्दन्तान्बभार। किंभूतान्रदान्—अनन्तोरगः अनन्तसंज्ञक उरगः शेषस्तस्य पुच्छं तद्वत्सुच्छवीञ्शोभनदीप्तीन्। 'सच्छवीन्' इति पाठे सदृशदीप्तीञ्श्वेतान्। किंभूतस्य मृणालजालस्य—जलेनार्धरुद्धस्यार्धावृतस्वरूपस्य। तथा—तटान्ते तटसमीपे या भूस्तां भिनत्तीति तटान्तभूभित्तस्य। आकण्ठमग्नत्वादैरावता न दृश्यन्ते किं तु दन्ता दृश्यन्ते। पूर्वं त्वेक एवैरावत आसीत्, अधुना तु बहव इत्यर्थः। आवलीशब्देन रत्नाधिकत्वं सूचितम्। एवमुत्तरत्रापि रत्नाधिक्यं द्रष्टव्यम्। तटान्तभूभेत्तृत्वं दन्तानामपि विशेषणम्। कर्मेः 'न लोका–' इति निषेधाभावात् 'अभ्रमुकामुक' इति षष्ठीसमासः। सच्छवीनित्यत्र 'समानस्य' इति योगविभागात्समानस्य सः॥

**तटान्तविश्रान्ततुरंगमच्छटास्फुटानुबिम्बोदयचुम्बनेन यः।**
**बभौ चलद्वीचिकशान्तशातनैः सहस्रमुच्चैःश्रवसामिवाश्रयन् १०९**

तटेति॥ यस्तडागः तटान्ते कूलप्रान्ते विश्रान्ताः स्थिता नलतुरंगमच्छटा अश्वसमूहास्तेषां स्फुटं प्रकटमुदितोऽनुबिम्बः प्रतिबिम्बस्तस्य चुम्बनेन संबन्धेन तत्प्रतिबिम्बमिषेणेत्यर्थः। उच्चैःश्रवसां सहस्रमाश्रयन्निव प्राप्नुवन्निव बभौ। किंभूतं सहस्रम्—वीचय एव कशा अश्वताडन्यस्तासामन्ताः प्रान्तास्तैर्यानि शातनानि ताडनानि तैश्चलच्चञ्चलम्। प्रतिबिम्बितं वस्तु तरङ्गवशाच्चञ्चलमिव प्रतिभाति। तत्र ताडितत्वेन चलत्वमुत्प्रेक्षागर्भम्। नलाश्वानामुच्चैःश्रवःसाम्यं द्योत्यते। 'अश्वादेस्ताडनी कशा' इत्यमरः॥

**सिताम्बुजानां निवहस्य यच्छलाद्बभावलिश्यामलितोदरश्रियाम्।**
**तमःसमच्छायकलङ्कसंकुलं कुलं सुधांशोर्बहलं वहन्बहु॥ ११०॥**

सितेति॥ यस्तडागः सिताम्बुजानां श्वेतोत्पलानां निवहस्य समूहस्य छलान्मिषात्सुधांशोश्चन्द्रस्य बहलं सान्द्रं विस्तृतं वा कुलं वृन्दं वहन्सन् बहु अतिशयेन बभौ शुशुभे।

---

१ 'अत्रानुप्रासातिशयोक्तिः समासोक्तिश्चालंकारः' इति **साहित्यविद्याधरी**। २ 'अत्रापह्नुतिरलंकारः' इति **साहित्यविद्याधरी**। 'मिषाद्व्याजात्' इत्यपह्नवालंकारः। 'तत्रैक एवैरावतः, अत्र त्वसंख्या इति व्यतिरेकः' इति **जीवातुः**। ३ 'अत्रापह्नुतिरूपकोत्प्रेक्षालंकारः' इति **साहित्यविद्याधरी**। प्राप्नुवन्निव बभावित्युत्प्रेक्षा। व्यतिरेकश्च पूर्ववत्। 'एतेन नलाश्वानामुच्चैःश्रवःसाम्यं गम्यते इत्यलंकारेण वस्तुध्वनिः' इति **जीवातुः**।

किंभूतानाम्—अलिभिर्भ्रमरैः श्यामलिता श्यामलीकृता उदरश्रीर्मध्यशोभा येषाम् । किंभूतं कुलम्—तमःसमच्छायोऽन्धकारसदृशशोभो यः कलङ्कस्तेन संकुलं व्याप्तम् । श्रियामिति भाषितपुंस्कत्वात्पुंवत्[1] ॥

**रथाङ्गभाजा कमलानुषङ्गिणा शिलीमुखस्तोमसखेन शार्ङ्गिणा ।**
**सरोजिनीस्तम्बकदम्बकैतवान्मृणालशेषाहिभुवान्वयायि यः॥१११॥**

रथेति ॥ यस्तडागः सरोजिनी कमलिनी तस्याः स्तम्बकदम्बो गुल्मसमूहस्तस्य कैतवान्मिषात्कमलिनीगुल्मसमूहेनैव शार्ङ्गिणा श्रीकृष्णेनान्वयायि अनुसृतः । कृष्णो हि समुद्रे शेते । कदम्बपदप्रयोगसामर्थ्यात् । शार्ङ्गिणेति जातावेकवचनम् । किंभूतेन—रथाङ्गं चक्रं, चक्रवाकश्च तद्भाजा । तथा—कमला लक्ष्मीः, कमलमुत्पलं तया, तेन च सहानुषङ्गः संबन्धोऽस्यास्तीति तेन । तथा—शिलीमुखस्तोमो भ्रमरसमूहस्तत्सखेन तत्सदृशेन तद्वच्छ्यामेन तत्सहितेन च, बाणसमूहसहितेन वा । तथा—मृणालमिव शेषाहिः स एव भूः शयनस्थानं यस्य मृणालान्येव शेषाहिः भूरुत्पत्तिस्थानं यस्य । कमलानुषङ्गिणेत्यत्र इनिः[2] ॥

**तरङ्गिणीरङ्कजुषः स्ववल्लभास्तरङ्गरेखा बिभरांबभूव यः ।**
**दरोद्गतैः कोकनदौघकोरकैर्धृतप्रवालाङ्कुरसंचयश्च यः ॥ ११२ ॥**

तरङ्गिणीरिति ॥ यस्तडागः तरङ्गरेखास्तरङ्गमाला एव तरङ्गिणीर्नदीर्बिभरांबभूव । व्यस्तरूपकम् । किंभूताः—अङ्कजुषो मध्यसेविनीरुत्सङ्गसेविनीश्च । तथा—स्ववल्लभाः स्वप्रियाः, प्राणेश्वरीश्च । यश्च तडागः दरोद्गतैरीषदुद्भूतैः कोकनदौघा रक्तोत्पलसमूहास्तेषां कोरकैर्मुकुलैः कृत्वा धृतः प्रवालाङ्कुरसंचयो विद्रुमाङ्कुरसमूहो येन (तादृगस्ति) । समुद्रे नद्यः प्रविशन्ति, विद्रुमाङ्कुराश्च बहवः सन्ति, तथात्रापीति समुद्रसाम्यम्[3] ॥

**महीयसः पङ्कजमण्डलस्य यच्छलेन गौरस्य च मेचकस्य च ।**
**नलेन मेने सलिले निलीनयोस्त्विषं विमुञ्चन्विधुकालकूटयोः ११३**

महीयस इति॥ यस्तडागो नलेन महीयसो महत्तरस्य गौरस्य श्वेतस्य तथा मेचकस्य नीलस्य पङ्कजमण्डलस्य कमलसमूहस्य छलेन व्याजेन सलिले निलीनयोर्निमग्नयोर्विधुकालकूटयोश्चन्द्रविषयोस्त्विषं दीप्तिं विमुञ्चन्नुद्गिरन्निव मेने शङ्कितः । समुद्रे यथा चन्द्रो विषं च तिष्ठति तथात्रापीति । विधुरमृतमिति केचित्[4] ॥

---

१ 'अत्र छलशब्देन पुण्डरीकेषु विषयापह्नवेन चन्द्रत्वाभेदादपह्नवभेदः व्यतिरेकश्च पूर्ववत्' इति **जीवातुः** । 'अत्रानुप्रासोऽपह्नुतिश्चालंकारः' इति **साहित्यविद्याधरी** । २ 'अत्रापि कैतवशब्देन स्तम्बत्वमपह्नुत्य शार्ङ्गित्वारोपादपह्नवभेदः' इति **जीवातुः** । अत्र श्लेषोपमापह्नुतयोऽलंकाराः' इति **साहित्यविद्याधरी** । ३ 'अत्रानुप्रासरूपकापह्नुतीनां संकरः' इति **साहित्यविद्याधरी** । अत्रापि 'कोकनदकोरकाणां विद्रुमत्वेन रूपणाद्रूपकालंकारः' इति **जीवातुः** । ४ 'अत्र छलेन विमुञ्चन्निव, इति सापह्नवोत्प्रेक्षा' इति **जीवातुः** ।

**चलीकृता यत्र तरङ्गरिङ्गणैरबालशैवाललतापरम्परा: ।**
**ध्रुवं दधुर्वाडवहव्यवाडवस्थितिप्ररोहत्तमभूमधूमताम् ॥ ११४ ॥**

चलीकृता इति ॥ यत्र यस्मिंस्तडागे तरङ्गरिङ्गणैस्तरङ्गस्खलनैः चलीकृताश्चालिता अबाला महत्यः शैवाललतास्तासां परम्पराः समूहाः वाडवहव्यवाट् वाडवानलस्तस्यावस्थितिरवस्थानं तेन प्ररोहत्तमोऽतिशयेन प्रादुर्भूतो भूमा बाहुल्यं यस्य एवंविधो यो धूमस्तस्य भावस्तत्ता तां दधुरिति ध्रुवं शङ्के । समुद्रे वाडवानलधूमस्तिष्ठति तद्वदत्रापि । प्ररोहत्तमधूमभूमतामिति क्वचित् । तत्र प्ररोहत्तमो धूमभूमा यासामिति । 'वहेश्च' इत्यस्य छान्दसत्वस्य प्रायिकत्वात् 'हव्यवाट्' इत्यत्र ण्विः । बहोर्भावो भूमा इति 'बहोर्लोपो भू च बहोः' इति सिद्धम् ॥

**प्रकाममादित्यमवाप्य कण्टकैः करम्बितामोदभरं विवृण्वती ।**
**धृतस्फुटश्रीगृहविग्रहा दिवा सरोजिनी यत्प्रभवाप्सरायिता ११५**

प्रकामेति ॥ यत्प्रभवा यस्मात्प्रभव उत्पत्तिर्यस्याः सा सरोजिनी कमलिनी दिवा (दिने) अप्सरायिता अप्सरस इवाचरिता अप्सरस्तुल्या । किंभूता—आदित्यं सूर्यमवाप्य प्रकाममतिशयेन कण्टकैः करम्बिता व्याप्ता । आमोदभरं सौगन्ध्यबाहुल्यं विवृण्वती प्रकटयन्ती । तथा—धृतः स्फुटानि विकसितानि श्रीगृहाणि कमलानि तान्येव विग्रहः शरीरं यया । अथ च एवंविधाः प्रकामं प्रकृष्टमदनमादित्यं देवं प्राप्य रोमाञ्चिता हर्षं प्रकटयन्त्यो दिवा स्वर्गेण धृतः स्फुटायाः प्रकाशमानायाः श्रियः शोभाया गृहं स्थानं विग्रहः शरीरं यासां ता अप्सरसोऽपि । आदित्यमिति 'दित्यदित्या—' इति ण्यः । अप्सरायितेति 'कर्तुः क्यङ् सलोपश्च' इति क्यङि 'ओजसोऽप्सरसः—' इत्यादिना सलोपः ॥

**यदम्बुपूरप्रतिबिम्बितायतिर्मरुत्तरङ्गैस्तरलस्तटद्रुमः ।**
**निमज्ज्य मैनाकमहीभृतः सतस्ततान पक्षान्धुवतः सपक्षताम् ११६**

यदिति ॥ यस्य तडागस्याम्बुन उदकस्य पूरे प्रवाहे प्रतिबिम्बिता प्रतिफलिता आयतिर्दैर्घ्यं यस्य एवंभूतस्तटद्रुमस्तीरवृक्षो निमज्ज्यान्तर्निलीय सतो विद्यमानस्य मैनाकमहीभृतो मैनाकनाम्नः पर्वतस्य सपक्षतां समानतां पक्षसाहित्यं च ततान विस्तारयामास । मैनाक इव स्थित इत्यर्थः । किंभूतः—मरुत्तरङ्गैर्वायुचालितोर्मिभिस्तरलश्चञ्चलः । किंभूतस्य—पक्षान्धुवतः कम्पयतः । अत्र वृक्षप्रतिबिम्बः समुद्रे मैनाकस्तिष्ठति ॥

युग्मम्—

**पयोधिलक्ष्मीमुषि केलिपल्वले रिरंसुहंसीकलनादसादरम् ।**
**स तत्र चित्रं विचरन्तमन्तिके हिरण्मयं हंसमबोधि नैषधः ॥११७॥**

१ 'अत्रोत्प्रेक्षालंकारः' इति साहित्यविद्याधरी । २ 'अत्रोपमाश्लेषालंकारौ' इति साहित्यविद्याधरी । ३ 'अत्रोपमालंकारः' इति साहित्यविद्याधरी । ४ 'अत्र छेकानुप्रास उपमा चालंकारः' इति साहित्यविद्याधरी ।

**प्रियासु बालासु रतक्षमासु च द्विपत्रितं पल्लवितं च बिभ्रतम्।**
**स्मरार्जितं रागमहीरुहाङ्कुरं मिषेण चञ्च्वोश्चरणद्वयस्य[1] च ॥११८॥**

पयोधीति युग्मम्॥ स नलस्तत्र तस्मिन्केलिपल्वले क्रीडाल्पसरसि चित्रमन्तिके विचरन्तं हंसीसमीपे गच्छन्तं हिरण्मयं सुवर्णमयं हंसमबोध्यज्ञासीत्। किंभूते—पयोधिः समुद्रस्तस्य लक्ष्मीं शोभां पूर्वोक्ताब्धिलक्षणप्रकारेण मुष्णातीति। किंभूतं हंसम्—रिरंसुं रन्तुमिच्छुः हंसी तस्याः कलनादोऽव्यक्तमधुरध्वनिस्तत्र सादरं साभिलाषम्। चित्रं सुवर्णमयत्वादाश्चर्यकारकं वा। अन्तिके पल्वलसमीपे वा। क्तप्रकारणातिवर्णितस्य पल्वलत्वमनुचितम्। तत्तु नलस्य क्रीडासर इति बुद्ध्या पल्वलशब्दप्रयोग इति वा। अथच विस्तरत्वात्समुद्रतुल्ये विनाशित्वात्पल्वलतुल्ये शरीरे विचरन्तं हंसं परमात्मानं कश्चिद्योगी पश्यति। रिरंसुर्हंसी शक्तिः तस्याः कलनादे सादरम्। हिरण्मयत्वं 'हिरण्मयः पुरुषः' इति श्रुतेः। विहरन्तमिति क्वचित्। हिरण्यस्य विकार इत्यर्थे मयटि 'दाण्डिनायन–' इत्यादिना हिरण्मयः साधुः। अबोधीति कर्तरि चिण्। प्रियास्विति–। किंभूतम्—बालासु प्रियासु रतक्षमासु च सुरतसमर्थासु प्रियासु चञ्च्वोर्मिषेण चरणद्वयस्य च मिषेण द्विपत्रितं द्विपत्रयुक्तं पल्लवितं पल्लवयुक्तं च स्मरार्जितं कामोत्पन्नं रागोऽनुरागस्तल्लक्षणो महीरुहो वृक्षस्तस्याङ्कुरं बिभ्रतं यथाक्रमं धारयन्तम्। बालासु स्वल्पोऽनुरागः प्रौढासु भूयानित्यर्थः। पत्रद्वयसाम्यं चञ्चुपुटस्य। अनेकाङ्गुलीसंयोगाच्चरणद्वयस्य पल्लवसाम्यम्। राजहंसस्य च चञ्चुचरणं लोहितम्। द्विपत्रपल्लवाभ्यां तारकादित्वादितच्। बिभ्रतमिति 'नाभ्यस्तात्–' इति नुमभावः। चञ्चुपुटस्य द्विपत्रितत्वाद्बालासु प्रियासु चुम्बनादिव्यापारः। प्रौढासु चरणद्वयस्य पल्लवितत्वात्सर्वाङ्गीण इति सूचितम्॥

**महीमहेन्द्रस्तमवेक्ष्य स क्षणं शकुन्तमेकान्तमनोविनोदिनम्।**
**प्रियावियोगाद्विधुरोऽपि निर्भरं कुतूहलाक्रान्तमना मनागभूत् ११९**

महीति॥ स महीमहेन्द्रः पृथ्वीन्द्रः प्रियावियोगाद्भैमीविरहान्निर्भरमत्यन्तं विधुरोऽपि विह्वलोऽपि तं शकुन्तं हंसं क्षणं मुहूर्तमवेक्ष्यावलोक्य मनागीषत्कुतूहलेन कौ-

---

१ 'चञ्चोः' इत्येकवचनान्तोऽपि पाठः क्वचित्। २—अत्र 'रागं बिभ्रतम्' इति हंसविशेषणाद्रागस्य हंसाधिकरणकत्वोक्तिः। प्रियास्वधिकरणभूतासु **इत्युपाध्यायविश्वेश्वर**व्याख्यानं प्रत्याख्येयम्। अन्यनिष्ठरागस्यान्याधिकरणकत्वायोगात्। नचायमेक एवोभयनिष्ठ इति भ्रमितव्यम्। अस्येच्छापरपर्यायस्य तथात्वायोगात्। अन्यथा बुद्ध्यादीनामपि तथात्वापत्तौ सर्वसिद्धान्तविरोधात्। विषयानुरागाभावप्रसङ्गाच्च। उभयोरपि रागित्वसाम्यादुभयनिष्ठत्वभ्रमः केषांचित्। तस्मात्कामिनोरन्योन्यविषयत्वमेव नाधिकरणत्वम् इति सिद्धम्। प्रियास्विति विषयसप्तमी न त्वाधारसप्तमीति सर्वं रमणीयम्। अत्र 'रागमहीरुहाङ्कुरम् इति रूपकं चञ्चुचरणमिषेण इत्यपह्नवानुप्राणितम्' इति संकरः। तेन च बाह्याभ्यन्तररागयोर्भेदेऽभेदलक्षणातिशयोक्त्युत्थापिता चञ्चुचरणव्याजेनान्तरस्येव बहिरङ्कुरितत्वोत्प्रेक्षा व्यज्यते इत्यलंकारेणालंकारध्वनिः' इति **जीवातुः**। 'अत्र अनुप्रासयथासंख्यरूपकापह्नुतिसंसृष्टिः' इति **साहित्यविद्याधरी**।

तुकेनाक्रान्तं मनोऽन्तःकरणं यस्यैवंभूतोऽभूत् । किंभूतम्—एकान्तेन नियमेन सर्वदाभीक्ष्णं वा मनो विनोदयति रञ्जयत्येवंशीलम् ॥

विरहित्वेऽपि तस्य कुतूहलाक्रान्तत्वं कुत इत्यपेक्षायां कविरर्थान्तरन्यासेनोत्तरमाह—ससैन्यनलदर्शनेनातिभीतः कथं तत्र निद्द्राविरित्युत्तरश्लोकाकाङ्क्षायामुत्तरश्लोकसमर्थनार्थं वार्थान्तरन्यासमाह—

**अवश्यभव्येष्वनवग्रहग्रहा यया दिशा धावति वेधसः स्पृहा ।**
**तृणेन वात्येव तयानुगम्यते जनस्य चित्तेन भृशावशात्मना ॥१२०॥**

अवश्येति ॥ अवश्यं नियमेन भव्येषु भवितव्येषु शुभादिषु विषयेऽनवग्रहोऽबाध्यमानो निरर्गलो ग्रहोऽभिनिवेशः प्रसरो यस्याः सा वेधसो ब्रह्मणः स्पृहा वाञ्छा यया दिशा येन मार्गेण धावति गच्छति तया दिशा तेनैव मार्गेण जनस्य लोकस्य चित्तेन सा वेधसः स्पृहानुगम्यते । यथा विधिः प्रेरयति तथा लोकः करोतीत्यर्थः । किंभूतेन चित्तेन—भृशमत्यर्थमवशोऽनधीन आत्मा स्वरूपं यस्य तेन । विधिस्पृहाधीनेनेत्यर्थः । यथा—अप्रतिबन्धा वात्या यया दिशा धावति तया दिशा निःसारत्वाद्वातपरतन्त्रेण तृणेन सा वात्यानुगम्यते तथेत्यर्थः । अवश्यंभाविभैमीपरिणयनानुकूले विधिप्रेरिते हंसे कौतुकं युक्तमिति भावः । विधिप्रेरितत्वादेव नलस्वीकृतस्वीयग्रहणपूर्वमोचनद्वारा नलस्योपकारार्थं सैन्यसंनिधावपि बुद्धिपूर्वं निद्द्राविति भावः । यद्वा-अनेनाकारेण तेन न ज्ञातस्तथापि विधिवशादेव भाविन्यपि सुखेऽन्तःकरणं सोत्साहं जातमिति भावः । अवश्यभव्येष्विति मयूरव्यंसकादित्वात्समासः । 'लुम्पेदवश्यमः—' इति मलोपः ॥[1]

**अथावलम्ब्य क्षणमेकपादिकां तदा निदद्रावुपपल्वलं खगः ।**
**स तिर्यगावर्जितकंधरः शिरः पिधाय पक्षेण रतिक्लमालसः ॥१२१॥**

अथेति ॥ अथानन्तरं स खगो हंसस्तदा तस्मिन्समये रतिक्लमेन सुरतखेदेनालसः सन् उपपल्वलं सरःसमीपे क्षणं निदद्रौ निद्रां चक्रे । किं कृत्वा—पक्षेण शिरः पिधायाच्छाद्य । किंभूतः—तिर्यगावर्जिता नम्रीकृता कंधरा ग्रीवा येन सः । पुनः किं कृत्वा—एकश्चासौ पादश्च एकपादः सोऽस्यां स्थितावस्तीति तां स्थितिमवलम्ब्याङ्गीकृत्य। पक्षिजातिरियम् । एकपादिकामिति बहुव्रीहौ कुम्भपद्यादिष्वेकपदीशब्दस्य पाठात्पादशब्दान्त्यलोपे 'पादोऽन्यतरस्याम्' इति ङीपि भत्वात्पदादेशे एकपदीमिति प्राप्ते 'न कर्मधारयान्मत्वर्थीयः' इति 'एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ' इति चानित्यत्वादनाश्रित्योक्तकर्मधारयादस्त्यर्थे ठनि इकादेशे समर्थनीयम् । उपपल्वलमिति सामीप्येऽव्ययीभावः[2][3] ॥

---

१ 'अत्रानुप्रासो विशेषश्चालंकारौ' इति साहित्यविद्याधरी । २ 'अत्रोपमालंकारः' इति साहित्यविद्याधरी । ३ 'अत्र जात्यलंकारः' इति साहित्यविद्याधरी । 'स्वभावोक्तिरलंकारः 'स्वभावोक्तिरलंकारो यथावद्वस्तुवर्णनम्' इति लक्षणात्' इति जीवातुः ।

**सनालमात्माननिर्जितप्रभं ह्रिया नतं काञ्चनमम्बुजन्म किम्।**
**अबुद्ध तं विद्रुमदण्डमण्डितं स पीतमम्भःप्रभुचामरं नु किम् १२२**

सनालमिति ॥ स नलः तं हंसमित्यबुद्ध तर्कितवान्। इतीति किम्—एकचरणावस्थानात्सनालं नालसहितमात्मनः स्वस्याननेन मुखेन निर्जिता प्रभा यस्य। अत एव ह्रिया लज्जया नतं नम्रं काञ्चनं सौवर्णमम्बुजन्म कमलमेतत्किम्। तथा—चरणस्य रक्तत्वाद्विद्रुमदण्डेन मण्डितमलंकृतं पीतं पीतवर्णमम्भःप्रभोर्वरुणस्य चामरं किमिति तर्कितवान्। कमलं सनालम्, चामरं च सदण्डं भवति। काञ्चनमिति विकारे 'अनुदात्तादेश्च' इत्यञ्। रजतादित्वाद्वा। अबुद्धेति बुध्यतेर्लुङि (सिज्लोपे) 'झषस्तथोर्धोऽधः' इति धादेशे रूपम्॥

**कृतावरोहस्य हयादुपानहौ ततः पदे रेजतुरस्य बिभ्रती।**
**तयोः प्रवालैर्वनयोस्तथाम्बुजैर्नियोद्धुकामे किमु बद्धवर्मणी॥१२३॥**

कृतेति ॥ ततोऽनन्तरं हयादश्वात्कृतावरोहस्य कृतोत्तरणस्यास्य नलस्य पदे चरणौ रेजतुः शुशुभाते। किंभूते पदे—उपानहौ बिभ्रती धारयमाणे। तत्रोत्प्रेक्षते—तयोः प्रकृतयोर्वनयोः काननोदकयोर्यथाक्रमं प्रवालैः पल्लवैः, तथाम्बुजैः सह नियोद्धुकामे संग्रामयितुकामे सती बद्धवर्मणी बद्धं वर्म कवचं याभ्यां ते। किमु संभावनायाम्। तथा समुच्चये। अत्र नियुद्धं युद्धमात्रम्, नतु बाहुयुद्धम्। तस्य पदे पल्लवरक्तोत्पलतुल्ये इति सूचितम्। योद्धुकामो बद्धकवचो भवति। 'वने सलिलकानने' इत्यमरः। उपानहाविति 'नहिवृति—' इति दीर्घः। रेजतुरिति 'फणां च सप्तानाम्' इत्येत्त्वाभ्यासलोपौ[2]॥

**विधाय मूर्तिं कपटेन वामनीं स्वयं बलिध्वंसिविडम्बिनीमयम्।**
**उपेतपार्श्वश्चरणेन मौनिना नृपः पतङ्गं समधत्त पाणिना॥१२४॥**

विधायेति ॥ अयं नृपः पाणिना हस्तेन पतङ्गं हंसं स्वयमेव समधत्त धृतवान्। किं कृत्वा—कपटेन बलिध्वंसी नारायणस्तस्य विडम्बिनीमनुसरणशीलां वामनीं ह्रस्वां मूर्तिं स्वरूपं विधाय कृत्वा। किंभूतः—मौनिना निःशब्देन चरणेन (पादेन) गमनेन वोपेतः प्राप्तः पार्श्वो हंससामीप्यं येन। त्रिविक्रमोऽपि बलिं छलयितुं वामनावतारमूर्तिं कृत्वा आकाशगामित्वान्निःशब्देन चरणेना(ङ्घ्रिणा) गमनेन वा प्राप्तसूर्यपार्श्वोऽभवत्। सूर्यं हस्तेनास्प्राक्षीदित्यागमः। पक्षिधारणजातिरुक्ता। वामनीमिति संबन्धेऽपि ङीप्, गौरादित्वान्ङीष् वा॥

---

१ 'अत्रानिश्चयः संदेहोऽलंकारः। तथाच रुद्रटः—'वस्तुनि यत्रैकस्मिन्ननेकविषयस्तु भवति संदेहः। प्रतिपत्तुः सादृश्यादनिश्चयः संशयः स इति॥' इति **साहित्यविद्याधरी**। २ 'अत्र यथासंख्योत्प्रेक्षालंकारः' इति **साहित्यविद्याधरी**। ३ 'अत्रोपमाजातिरलंकारः' इति **साहित्यविद्याधरी**।

**तदात्तमात्मानमवेत्य संभ्रमात्पुनःपुनः प्रायसदुत्प्लवाय सः।**
**गतो विरुत्योड्डयने निराशतां करौ निरोद्धुर्दशति स्म केवलम् १२५**

तदात्तमिति ॥ स हंस आत्मानं तेन नलेनात्तं धृतमवेत्य ज्ञात्वा संभ्रमाद्भयात्पुनःपुनः उत्प्लवायोड्डीनगमनाय प्रायसद्यत्नं चक्रे। अनन्तरमुड्डयने निराशतां निष्प्रयत्नत्वम्, आशा राहित्यं वा गतः प्राप्तः सन्विरुत्य दीनं शब्दं कृत्वा केवलं निरोद्धुर्गृहीतुर्नलस्य करौ दशति स्म ददंश। पक्षिजातिः। प्रायसदिति 'यसु प्रयत्ने' इत्यस्मात् 'यसोऽनुपसर्गे' इति श्यनो निषेधे लङि शप्। यद्वा लुङि पुषादित्वादङ्। तदेति भिन्नं वा ॥

**ससंभ्रमोत्पातिपतत्कुलाकुलं सरः प्रपद्योत्कतयानुकम्प्रताम्।**
**तमूर्मिलोलैः पतगग्रहान्नृपं न्यवारयद्वारिरुहैः करैरिव ॥ १२६ ॥**

ससंभ्रमेति ॥ सरः कर्तृ सजातीयधारणात्ससंभ्रमं भयसहितमुत्पाति अवश्यमुत्पतनशीलं पतत्कुलं पक्षिकुलं तेन आकुलं व्याप्तं सत्। अत एव पक्षिपक्षवातेन योत्कता उत् उच्छलत्कमुदकं यस्य तस्य भावस्तत्ता तया, हंसोत्कण्ठतया वा अनुकम्प्रतां सकम्पतां, दयालुतां वा प्रपद्य प्राप्य ऊर्मिलोलैस्तरङ्गचञ्चलैर्वारिरुहैः कमलैरेव करैर्हस्तैस्तं नृपं पतगग्रहाद्धंसग्रहणान्न्यवारयदिव न्यषेधयदिव। करैरिवेति वा। (अन्योऽपि) कश्चिज्जिघांसुमुत्कण्ठितत्वेन दयालुतां प्राप्य चञ्चलैः कमलतुल्यैः करैर्वारयति। इयमपि पक्षिजातिः। कम्प्रेत्यत्र 'नमिकम्पि-' इति रः। यद्यपि सरसः पतगग्रहो नेष्टः, तथापि नृपस्येष्ट इति। 'वारणार्थानाम्-' इत्यपादानत्वम् ॥

**पतत्रिणा तद्रुचिरेण वञ्चितं श्रियः प्रयान्त्याः प्रविहाय पल्वलम्।**
**चलत्पदाम्भोरुहनूपुरोपमा चुकूज कूले कलहंसमण्डली ॥ १२७ ॥**

पतत्रिणेति ॥ कलहंसमण्डली राजहंससंहतिः कूले तीरे चुकूज शब्दं चकार। किंभूता—तत् पल्वलमल्पसरः प्रविहाय त्यक्त्वा प्रयान्त्या गच्छन्त्याः श्रियः शोभायाः शब्दच्छलेन लक्ष्म्याः चलन्ती ये पदाम्भोरुहे चरणकमले तयोर्वर्तमानौ नूपुरौ तदुपमा तत्तुल्या। श्रीत्यागे कारणमाह—किंभूतं पल्वलम्—रुचिरेण सुन्दरेण पतत्रिणा पक्षिणा हंसेन वञ्चितं रहितम्। तस्या नूपुरसाम्यात् कूजितस्य मञ्जीरशब्दसाम्यम्, कूजनेनैव तस्या नूपुरतुल्यत्वं वा। यथा सुखप्रदेन प्रियेण त्यक्तं स्थानं त्यक्त्वा गच्छन्त्याः प्रियायाश्चरणे नूपुरौ कूजत इति श्लेषः। प्रयान्त्या इति वर्तमानप्रत्ययेन श्रियः शीघ्रं प्रत्यागमनं सूचितम्। 'कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे' इति विश्वः ॥

**न वासयोग्या वसुधेयमीदृशस्त्वमङ्ग यस्याः पतिरुज्झितस्थितिः।**
**इति प्रहाय क्षितिमाश्रिता नभः खगास्तमाचुक्रुशुरारवैः खलु १२८**

१—'वारिरुहैः करैः' इति व्यस्तरूपकम्। न्यवारयदिव इत्युत्प्रेक्षा। वास्तवनिवारणासंभवादुत्प्रेक्षा निवारणस्य करसाध्यत्वात्तत्र रूपकाश्रयणम् अत एवेवशब्दस्य उपमावाधेनार्थानुसाराद्व्यवहितान्वयेनाप्युत्प्रेक्षाव्यञ्जकत्वमिति रूपकोत्प्रेक्षयोरङ्गाङ्गिभावेन संकरः' इति **जीवातुः**। 'अत्रानुप्रासोत्प्रेक्षारूपकस्वभावोक्तीनां संकरः' इति **साहित्यविद्याधरी**। २ 'अत्रानुप्रासोपमास्वभावोक्तीनां संकरः' इति **साहित्यविद्याधरी**।

नेति ॥ क्षितिं प्रहाय त्यक्त्वा नभोऽन्तरिक्षमाश्रिताः प्राप्ताः खगाः पक्षिण आरवैः शब्दैस्तं नलमिति पूर्वोक्तप्रकारेणाचुक्रुशुर्निनिन्दुः । खलु उत्प्रेक्षायां, निश्चये वा। इतीति किम्—हे अङ्ग, दीनकर्तृकसामर्षामन्त्रणे यस्या वसुधाया उज्झितस्थितिस्त्यक्तमर्याद ईदृशो निरपराधप्राणिधारणलक्षणमधर्मं कुर्वाणो निरपत्रपो वा त्वं पतिः पालयिता सेयं वसुधा पृथ्वी वासयोग्या न भवतीति वरं शून्यं नभ एव आश्रयिष्यामः, न तु बहुधनरत्नसंपूर्णां वसुंधराम्। दुष्टस्वामित्वादित्यर्थः। अन्योऽपि सोपद्रवं देशं त्यजति। आरवैरित्यत्र 'ऋदोरप्' इत्यपो नित्यम् 'उपसर्गे रुवः' इति बाधके घञि प्राप्ते 'विभाषाङि रुप्लुवोः' इत्याङि घञो विकल्पविधानात्पक्षेऽप् ॥

**न जातरूपच्छदजातरूपता द्विजस्य दृष्टेयमिति स्तुवन्मुहुः।**
**अवादि तेनाथ स मानसौकसा जनाधिनाथः करपञ्जरस्पृशा १२९**

न जातेति ॥ अथानन्तरमिति पूर्वोक्तप्रकारेण मुहुर्वारंवारं स्तुवन्स जनाधिनाथो नलः (तेन) मानसौकसा हंसेनावादि वक्ष्यमाणप्रकारेणोक्तः । किंभूतेन—करपञ्जरं हस्तलक्षणं पञ्जरं पक्षिबन्धनयन्त्रं स्पृशतीति तेन । इतीति किम्—द्विजस्य पक्षिणो जातरूपस्य सुवर्णस्य छदौ पक्षौ ताभ्यां जातं रूपं सौन्दर्यं यस्य तस्य भावस्तत्ता, सा क्वापि न दृष्टेति। अथच ब्राह्मणमात्रस्य सौवर्णप्रच्छदसंजातसौन्दर्यमाश्चर्यकारि भवति। पञ्जरपदेन करपुटस्य शैथिल्यात्पीडाभावः सूच्यते ॥

**धिगस्तु तृष्णातरलं भवन्मनः समीक्ष्य पक्षान्मम हेमजन्मनः।**
**तवार्णवस्येव तुषारसीकरैर्भवेदमीभिः कमलोदयः कियान् ॥१३०॥**

धिगिति ॥ हे राजन्, हेमजन्मनः सुवर्णप्रभवस्य सुवर्णप्रभवत्वान्मम पक्षान्समीक्ष्य दृष्ट्वा तृष्णया स्पृहया तरलं चञ्चलं भवन्मनस्त्वदन्तःकरणं धिक् गर्ह्यमस्तु । सुवर्णाभिलाषेणैव त्वयाहं धृतः, स्तुतश्चेत्यर्थः। अमीभिः पक्षैस्तव राज्ञः सतः कियान्कियत्परिमाणः कमला लक्ष्मीस्तस्या उदय आधिक्यं भवेत् । अपितु नाल्पोऽपीत्यर्थः। कैः कस्येव—तुषारसीकरैर्हिमकणैरर्णवस्य समुद्रस्येव। यथा हिमकणैः समुद्रस्य कमलं जलं तस्योदयः कियान्। यथोदकवृद्ध्यर्थं समुद्रेण हिमकणा नाद्रियन्ते, तथा समृद्धेन त्वया मम पक्षसुवर्णं नाभिलषणीयमिति भावः । परद्रव्याभिलाषेण कियांल्लक्ष्मीसमुदयो भवेत्, अपि तु विपदेवेति वा। 'कमला श्रीर्हरिप्रिया', 'सलिलं कमलं जलम्' इत्यमरः। धिग्योगे मन इति द्वितीया[3] ॥

**न केवलं प्राणिवधो वधो मम त्वदीक्षणाद्विश्वसितान्तरात्मनः।**
**विगर्हितं धर्मधनैर्निबर्हणं विशिष्य विश्वासजुषां द्विषामपि ॥१३१॥**

न केवलमिति ॥ हे राजन्, त्वदीक्षणात्साधोस्तव ईक्षणाद्विलोकनाद्विश्वसितो विश्वासं प्राप्तोऽन्तरात्मा मनो यस्यैवंभूतस्य मम वधः केवलं प्राणिवधो जन्तुहिंसामात्रं

१ 'अत्रोत्प्रेक्षालंकारः' इति साहित्यविद्याधरी। २ 'अत्रानुप्रासरूपकालंकारौ' इति साहित्यविद्याधरी। ३ 'अत्रोपमालंकारः' इति साहित्यविद्याधरी।

न भवति, किंतर्हि धर्म एव धनं येषां तैर्मन्वादिभिर्द्विषां वैरिणामपि विश्वासजुषां विश्वसितानां निबर्हणं मारणं विशिष्योत्कृष्य विगर्हितं विशेषेण निन्दितम्। धर्मधनैर्निबर्हणं हिंसामात्रं निन्दितम्। सामान्येनेत्यर्थः। विश्वासजुषां(तु) द्विषामपि निबर्हणं विशिष्य विशेषतो गर्हितमिति वा योजना। विश्वासघातकस्य गुरुप्रायश्चित्तप्रतिपादनात्। यस्तु मारणीयस्तस्यापि विश्वसितस्य मारणं निन्दितम्, किंपुनर्निरपराधस्य मादृशस्येति भावः॥

**पदेपदे सन्ति भटा रणोद्भटा न तेषु हिंसारस एष पूर्यते।**
**धिगीदृशं ते नृपते कुविक्रमं कृपाश्रये यः कृपणे पतत्रिणि॥ १३२**

पद इति॥ हे नृपते, पदेपदे स्थानेस्थाने रणोद्भटाः सङ्ग्रामदुर्मदा भटाः शूराः सन्ति विद्यन्ते। एष हिंसारसो मारणानुरागस्तेषु भटेषु न पूर्यते परिपूर्णो न भवति इति काकुः। अपितु भवितुं युक्तः। एष हिंसारसस्त्वया भटेषु परिपूर्णः कर्तव्यः। स्थानेस्थाने भटाः सन्ति परमेष हिंसारसो नतेषु नम्रेषु मादृशेषु त्वया पूर्णः क्रियते इति शिरश्चालनेनायुक्तत्वमेव ध्वन्यते। तेषां शूरतरत्वात्तान्प्रति किंचिदपि कर्तुं न शक्नोषीति भाव इति वा। स्थानेस्थाने शूरा न सन्ति। काकुः। एष हिंसारसस्तेषु परिपूर्णो भवितुं युक्तो न त्वस्मास्विति वा। तेषु हिंसारसो न परिपूर्णः क्रियते त्वया, ततश्चास्मासु परिपूर्णः क्रियत इति वा। ईदृशं विश्वासहननलक्षणं ते कुविक्रमं कुत्सितं पौरुषं धिक्। निन्द्यस्ते पराक्रम इत्यर्थः। यः पराक्रमः कृपणे दीने कृपाश्रये करुणास्पदे मयि पतत्रिणि पक्षिणि वर्तते। पुनर्धिक्पदमतिशयानिन्दासूचकम्। कौ पृथिव्यां प्रसिद्धं विक्रममिति वा। 'पूरी पूर्तौ (आप्यायने)' इत्यस्य कर्तरि श्यनि पूर्यते इति रूपम्। कर्मणि क्यपि (यकि) वा[1][2]॥

**फलेन मूलेन च वारिभूरुहां मुनेरिवेत्थं मम यस्य वृत्तयः।**
**त्वयाद्य तस्मिन्नपि दण्डधारिणा कथं न पत्या धरणी हृणीयते[4] १३३**

फलेनेति॥ हे राजन्, वार्येव भूरुत्पत्तिस्थानं वारिभूस्तस्यां रोहन्त उत्पद्यन्ते तेषां कमलानां फलेन पद्माक्षलक्षणेन मूलेन, कन्दादिना च यस्य मम हंसस्येत्थमभिनयेन पुरोवर्तितया दर्शयति। मुनेरिव वृत्तयो जीवनानि। इत्थं सर्वलोकसमक्षमिति वा। तस्मिन्नप्यनपराधे निस्पृहे ऋषितुल्येऽपि मयि अद्य दण्डधारिणा शास्तिकारिणा त्वया पत्या स्वामिना धरणी पृथ्वी कथं न हृणीयते! अन्यायवर्तिनि प्रिये स्त्रियो यथा लज्जन्ते। वारिरुहां भूरुहां चेति वा। कण्ड्वादिषु 'हृणीञ् रोषे लज्जायां च' इत्यस्माद्धातोः कण्ड्वादित्वात्स्वार्थे यकि ञित्त्वात् 'स्वरितञितः—' इति सूत्रेण कर्तृगामिनि क्रियाफले तङ्। 'हृणीङ्' इति पाठान्ङित्त्वात्तङ्। हृणीङ् सौत्रो धातुर्लज्जार्थे [इति] केचित्[5]॥

---

१ 'अत्र विदग्धानुप्रासकाव्यलिङ्गालंकारौ' इति साहित्यविद्याधरी। २ 'क्यपि' इति पाठस्त्वसंगत एव 'सार्वधातुके यक्' इत्यत्र यक एव विधानात्। ३ 'अत्र विदग्धानुप्रासोऽलंकारः' इति साहित्यविद्याधरी। ४ 'घृणीयते' इति पाठः। ५ 'अत्र यथासंख्योपमालंकारौ' इति साहित्यविद्याधरी।

**इतीदृशैस्तं विरचय्य वाङ्मयैः सचित्रवैलक्ष्यकृपं नृपं खगः।**
**दयासमुद्रे स तदाशयेऽतिथीचकार कारुण्यरसापगा गिरः ॥१३४॥**

इतीति ॥ स खगो हंस इत्यनेन प्रकारेण ईदृशैरेतादृशैरन्यैरपि वाङ्मयैर्वचनैस्तं नृपं राजानं सचित्रवैलक्ष्यकृपं चित्रं च वैलक्ष्यं च कृपा च तत्सहितं विरचय्य विधाय दयासमुद्रे कृपासिन्धौ तस्य नलस्याशये हृदये कारुण्यलक्षणो रसस्तस्यापगा नदीः गिरो वाचोऽतिथीचकार। करुणा वाचस्तमाकर्णयामासेत्यर्थः। पक्षिणो मनुष्यवाक्त्वाद्, हेमपक्षत्वाद्वा चित्रमाश्चर्यम्। स्वनिन्दाश्रवणात्सलज्जत्वम्। तद्दैन्यश्रवणात्कृपा। समुद्रे च रसनद्योऽतिथीभवन्ति। 'आत्मनश्चरिते सम्यग्ज्ञातेऽन्यैर्यस्य जायते। अपत्रपातिमहती स विलक्ष इति स्मृतः॥' विरचय्येति 'ल्यपि लघुपूर्वात्' इति णेरयादेशः। वाङ्मयैरिति 'नित्यं वृद्धशरा-' इति नित्यग्रहणादेकाचो मयट्। 'बहुष्वनियमः' इति कृपाशब्दस्य पूर्वनिपातः। कारुण्येति स्वार्थे ष्यञ्[1] ॥

**मदेकपुत्रा जननी जरातुरा नवप्रसूतिर्वरटा तपस्विनी।**
**गतिस्तयोरेष जनस्तमर्दयन्नहो विधे त्वां करुणा[2] रुणद्धि न ॥१३५॥**

मदिति ॥ कारुण्यगिरोऽन्यापदेशेन राजानं श्रावयति—जननी मम माता जरातुरा वार्धक्यपीडिता स्वतो जीवितुमसमर्था। तर्हि पुत्रान्तरेण जीविका स्यात्, तदपि नेत्याह—यतो मदेकपुत्रा अहमेवैकः पुत्रो यस्याः सा। तर्हि तव स्त्री स्यात्, नेत्याह—वरटा मम स्त्री नवप्रसूतिर्नवप्रसवा। सापि स्वतो जीवितुमसमर्था। पत्यन्तरेणापि जीविकासंभावितेत्याह—यतः तपस्विनी पतिव्रता, अथ च दीना। एष मल्लक्षणो जनस्तयोर्मातृपत्न्योर्गतिर्वृत्त्युपायः। यद्वा—मत्त एकः पुत्रो यस्याः सा। अजननी मन्मरणानन्तरमप्रसवित्री। यतो जरातुरा न वृद्धा न। प्रसवसंभावनायामपि पातिव्रत्यादजननी। वप्रे सूतिश्चेष्टा यस्याः। यद्वा—वप्र एव सानुरेव सुतरामूती रक्षणं यस्याः सा। मद्वियोगात्पर्वतभ्रमणं करिष्यतीत्यर्थः। वरटाविशेषणानि। तयोः पुत्रवरटयोः। तं मामर्दयन्पीडयन्मारयन् हे विधे ब्रह्मन्, दैव वा। करुणा दया त्वां न रुणद्धि नावृणोति। न वारयतीत्यर्थः। अहो आश्चर्यम्। एवंविधपीडने हि त्वया सदयेन भवितव्यम्। तव देवस्य सतो दया नोत्पद्यते, किं पुनर्मनुष्यस्येति करुणोक्तिः। 'हंसस्य योषिद्वरटा' इत्यमरः। अर्दयन्निति चौरादिकादर्दयतेः 'संबोधने च' इति शता। आत्मनेपद्येवेति केचित्। तदा 'गणकृत्यमनित्यम्' इत्यर्दनमर्दस्तद्वन्तं कुर्वन्निति मतुल्लुका वा समाधिः[3] ॥

**मुहूर्तमात्रं भवनिन्दया दयासखाः सखायः स्रवदश्रवो मम।**
**निवृत्तिमेष्यन्ति परं दुरुत्तरस्त्वयैव मातः सुतशोकसागरः ॥१३६॥**

---

१ 'अत्रानुप्रासरूपकावलंकारौ' इति साहित्यविद्याधरी। २ 'करुणाम्' इति द्वितीयान्तः पाठः। रुधेर्द्विकर्मकत्वात् त्वां करुणां च इति कर्मद्वयम्। कर्तृगुप्तकोऽयं श्लोकः इति साहित्यविद्याधरी। ३ 'अत्र परिकरालंकारः' इति साहित्यविद्याधरी।

मुहूर्तेति ॥ मम सखायो मित्राणि पक्षिणः मुहूर्तमात्रं क्षणमात्रमीदृश्येव संसारस्थितिरिति भवस्य निन्दया निवृत्तिं दुःखविस्मरणमेष्यन्ति यास्यन्ति । किंभूताः—स्रवन्ति गलन्त्यश्रूणि येषाम् । तथा—दयासखा दयालवः । हे मातः, परं केवलं सुतशोकः पुत्रशोक एव सागरः समुद्रस्त्वयैव दुरुत्तरो दुःखेनापि तरितुमशक्यः । भविष्यतीति शेषः। 'मम मित्राणां क्षणमात्रं दुःखं, तव तु यावज्जीवमिति भावः । मुहूर्तमात्रमिति 'कालाध्वनोः–' इति द्वितीया । दयासखा इति 'राजाहःसखिभ्यष्टच्' । दुरुत्तर इति खल् । 'न लोका–' इति निषेधात्त्वयेति तृतीया ॥

**मदर्थसंदेशमृणालमन्थरः प्रियः कियद्दूर इति त्वयोदिते ।**
**विलोकयन्त्या रुदतोऽथ पक्षिणः प्रिये स कीदृग्भविता तव क्षणः१३७**

मदर्थेति ॥ हे प्रिये, स तव क्षणः समयः कीदृक्कीदृशो भविता भविष्यति । नितरामनिर्वाच्यो भविष्यतीति भावः । किंभूतायास्तव—त्वया इति पूर्वोक्तप्रकारेण वचसि मत्सहचरान्प्रत्युदिते उक्ते सति । पृष्टे सतीत्यर्थः । अथानन्तरमेव पक्षिणो मत्सहचरान्रुदतो रोदनं कुर्वतो विलोकयन्त्याः पश्यन्त्याः । इतीति किम्—हे सहचराः, मद्यमिमे मदर्थे ये संदेशमृणाले संदेशश्च मृणालं च तयोर्विषये मन्थरोऽलसः । तत्र गत्वा त्वमिदं मत्प्रियां ब्रूहि इति संदेश आज्ञा, मृणालं च मद्भक्ष्यम् । एवंभूतो मत्प्रियः कियद्दूरे पथि वर्तत इति । कियद्दूरं यस्येति प्रियविशेषणं वा । पूर्वत्रान्यपदार्थः पन्थाः । मदर्थं मृणालान्यानेयानीति संदेशमृणालानि तैर्मन्थरो, भारबाहुल्यान्मन्दर इति वा । मदर्थ इति 'अर्थेन नित्यसमासः–' इति समासः[1] ॥

**कथं विधातर्मयि पाणिपङ्कजात्तव प्रियाशैत्यमृदुत्वशिल्पिनः ।**
**वियोक्ष्यते वल्लभयेति निर्गता लिपिर्ललाटंतपनिष्ठुराक्षरा ॥१३८॥**

कथमिति ॥ हे विधातः ब्रह्मन्, मयि विषये तव पाणिपङ्कजात्करकमलादित्येवंभूता लिपिः कथं निर्गता । किंभूतात्—प्रियायाः शैत्यं शीतत्वं, मृदुत्वं च तयोः शिल्पिनो निर्मातुः । इतीति किम्—त्वं वल्लभया प्रियया सह वियोक्ष्यसे वियोगं प्राप्स्यसीति । (किंभूता—) ललाटं तापयन्ति ललाटंतपानि निष्ठुराणि कठिनान्यक्षराणि यस्याः । लिप्यामेतदयुक्तमित्यर्थः । 'कारणगुणाः कार्यगुणानारभन्ते' इति न्यायात् । करपङ्कजं शीतलं मृदु च तस्य दाहकठिनयोरुत्पादकत्वं विरुद्धमिति भावः । ललाटंतपेत्यत्र 'असूर्यललाटयोः–' इति खश्, 'अरुर्द्विषदजन्तस्य–' इति मुम्[2] ॥

**अयि स्वयूथ्यैरशनिक्षतोपमं ममाद्य वृत्तान्तमिमं बतोदिता ।**
**मुखानि लोलाक्षि दिशामसंशयं दशापि शून्यानि विलोकयिष्यसि ॥**

---

१ 'अत्रानुप्रासरूपकालंकारौ' इति साहित्यविद्याधरी । २ 'अत्र भावोदयालंकारः' इति साहित्यविद्याधरी । ३ 'अत्र विषमं रूपकं चालंकारः । तथा च रुद्रटः—'कार्यस्य कारणस्य च यत्र विरोधः परस्परं गुणयोः । तद्वत्क्रिययोरथवा संजायेतेति तद्विषमम् ॥' अत्र निष्ठुरत्वतापत्वमृदुत्वशैत्यगुणविरोधः' इति साहित्यविद्याधरी ।

अयीति ॥ अयि प्रिये, लोलाक्षि स्वभावतः शोकवशाच्चञ्चलनेत्रे, त्वमद्य दिशां दशापि मुखान्यसंशयं निश्चितमेव शून्यानि रिक्तानि विलोकयिष्यसि ईक्षयिष्यसि । बत खेदे । मां विना सर्वं शून्यमिव द्रक्ष्यसीति भावः । किंभूता—स्वयूथ्यैः स्ववर्ग्यैर्हंसैरशनिक्षतोपमं वज्रप्रहारसदृशमिमं मरणरूपं मम वृत्तान्तं वार्तामुदितोक्ता । ब्रूञोऽर्थग्रहणाद्द्विकर्मा । वृत्तान्तम् । मुख्यकर्मणि द्वितीया ॥

**ममैव शोकेन विदीर्णवक्षसा त्वया विचित्राङ्गि विपद्यते यदि ।**
**तदास्मि दैवेन हतोऽपि हा हतः स्फुटं यतस्ते शिशवः परासवः ॥**

ममैवेति ॥ हे विचित्राङ्गि सुन्दरगात्रि, ममैव शोकेन दुःखेन विदीर्णवक्षसा स्फुटितहृदयया यदि विपद्यते म्रियते, तदा तर्हि हा खेदे अहं दैवेन हतोऽपि पुनर्हतोऽस्मि । यतः—स्फुटं निश्चितं ते इत्यभिनयेनाल्पीयांसः शिशवो बालकाः परासवो मृता भवेयुः । मां विना त्वत्तोऽपि तेषां जीवनं संभाव्यते, तव मरणे सति तेऽपि मरिष्यन्तीति पिष्टपेषणमेव दैवेन कृतमिति भावः । 'एकशोकेन' इति पाठः ॥

**तवापि हाहा विरहात्क्षुधाकुलाः कुलायकूलेषु विलुठ्य तेषु ते ।**
**चिरेण लब्धा बहुभिर्मनोरथैर्गताः क्षणेनास्फुटितेक्षणा मम॥१४१॥**

तवेति ॥ हाहा इति खेदे । हे प्रिये, मम ते बालका बहुभिर्मनोरथैश्चिरेण बहुकालेन लब्धाः सन्तः क्षणेन गताः । मृतप्राया इत्यर्थः । किंभूताः—क्षुधाकुलाः । तथा—अतिबाल्यादस्फुटितेक्षणा अप्रकाशितनेत्राः । किंकृत्वा—तवापि । अपिशब्दान्ममापि विरहात्तेषु प्रसिद्धेषु कुलायकूलेषु स्वकृतनीडतटेषु विलुठ्य लुठित्वा । पूर्वश्लोकार्थानुवादः[3] ॥

इति प्रियां प्रत्युक्त्वा सुतान्प्रत्याह—

**सुताः कमाहूय चिराय चुंकृतैर्विधाय कम्प्राणि मुखानि कं प्रति ।**
**कथासु शिष्यध्वमिति प्रमील्य सः स्रुतस्य सेकाद्बुबुधे नृपाश्रुणः ॥**

सुता इति ॥ हे सुताः पुत्राः, जननीं मां च विना चुंकृतैः शिशुपक्षिसूक्ष्मशब्दविशेषैश्चिराय कमाहूयाकार्य भक्ष्यं याचयिष्यथ । कं प्रति कम्प्राणि चलानि मुखानि विधाय गोष्ठीः कथयिष्यथ । अपि तु न कमपि प्रति । उभयोर्मृतत्वात् । शिशुपक्षिणामियं जातिः । एवं सति परं पूर्वकथासु शिष्यध्वं कथाशेषी भविष्यथेत्युक्त्वा स हंसः प्रमील्य मूर्छां प्राप्य स्रुतस्य कारुण्याद्गलितस्य नृपाश्रुणो नृपनेत्रबाष्पस्य सेकात्सेचनाद्बुबुधे । भक्ष्ययाचनं गोष्ठीकरणं च कवेरुक्तिः, न तु हंसस्य । तस्य वचः आहूय विधायेत्येतदन्तम् । शोकवशात्खण्डोक्तिः करुणारसपोषिका । गोष्ठीषु विषये चतुरा भविष्यथेति पितरं मातरं च विना युष्मान्वकुमपि कः शिक्षयेदिति वाक्यशेषो वा । शि-

---

१ 'अत्रानुप्रासोपमालंकारौ' इति साहित्यविद्याधरी । २ 'अत्र काव्यलिङ्गमलंकारः' इति साहित्यविद्याधरी । ३ 'अत्र विरोधाभासोऽलंकारः' इति साहित्यविद्याधरी ।

ध्यध्वमिति कर्मकर्तरि प्राप्तकाले लोटस्तङ् । एवमहमपि कथासु शिष्ये इत्युत्तरं चापि ज्ञेयम्[१] ॥

**इत्थममुं विलपन्तममुञ्चद्दीनदयालुतयावनिपालः ।**
**रूपमदर्शि धृतोऽसि यदर्थं गच्छ यथेच्छमथेत्यभिधाय १४३**

इत्थमिति ॥ अवनिपालो राजा दीनेषु दयालुस्तस्य भावस्तत्ता तया इत्यभिधायोक्त्वा इत्थं पूर्वोक्तप्रकारेण विलपन्तं विलापं कुर्वन्तममुं हंसममुञ्चदत्यजत् । इतीति किम्—हे हंस, यदर्थं धृतोऽसि तद्रूपमदर्शि दृष्टम् । अथातःपरं त्वं यथेच्छं स्वेच्छया गच्छ । यदर्थं धृतोऽसीत्यादिना 'धिगस्तु तृष्णा–' इत्यादि परिहृतम् । 'स्पृहिगृहि–' इत्यालुचि दयालुः । दोधकं वृत्तम्[२] ॥

**आनन्दजाश्रुभिरनुस्रियमाणमार्गा-**
**न्प्राक्शोकनिर्गमितनेत्रपयःप्रवाहान् ।**
**चक्रे स चक्रनिभचङ्क्रमणच्छलेन**
**नीराजनां जनयतां निजबान्धवानाम् ॥ १४४ ॥**

आनन्देति ॥ स हंसः चक्रनिभं चक्राकारं चङ्क्रमणं भ्रमणं तस्य छलेन व्याजेन नीराजनामारार्तिकां जनयतां कुर्वतां निजबान्धवानां स्वीयमित्राणां प्राक्स्वग्रहणसमये शोकेन निर्गतान्नेत्रपयःप्रवाहान्बाष्पप्रवाहान्स्वमुक्तिसमये आनन्दजाश्रुभिरानन्दजनितबाष्पैरनुस्रियमाणमार्गाननुगम्यमानमार्गांश्चक्रे । धृते हंसे रुरुदुः, मुक्ते जहसुरित्यर्थः । बद्धमुक्तं पक्षिणं वेष्टयित्वा पक्षिणो भ्रमन्ति रुदन्ति चेति पक्षिजातिः । अन्यस्यापि कारागृहादिबद्धविमुक्तस्यानन्दाश्रुसहितैर्बान्धवैर्नीराजना क्रियते । चङ्क्रमणमिति क्रमेर्गतिकौटिल्ये । यङन्ताद्भावे ल्युट् । वलयाकारापि गतिः कुटिलैव । 'यङोऽचि च' इति चकारादन्यत्रापि यङो लुक् । सर्वसर्गसमाप्तिश्लोकेष्वानन्दपदप्रयोगादानन्दाङ्कमिदं काव्यम् । वसन्ततिलकावृत्तम्[३] ॥

**श्रीहर्षं कविराजराजिमुकुटालंकारहीरः सुतं**
**श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।**
**तच्चिन्तामणिमन्त्रचिन्तनफले शृङ्गारभङ्ग्या महा-**
**काव्ये चारुणि नैषधीयचरिते[४] सर्गोऽयमादिर्गतः ॥ १ ॥**

श्रीहर्षमिति ॥ श्रीहीरनामा पिता मामल्लदेवी माता च यं श्रीहर्षनामानं पुत्रं सुषुवे । किंभूतः श्रीहीरः—कविराजानां राजिः पङ्क्तिस्तस्या मुकुटानामलंकाररूपो हीरो ही-

---

१ 'अत्र जातिरलंकारः' इति साहित्यविद्याधरी । २ 'अत्रानुप्रासोपमालंकारः' इति साहित्यविद्याधरी । ३ 'अत्रानुप्रासापह्नुतिजात्यलंकारसंसृष्टिः' इति साहित्यविद्याधरी । ४ 'नैषधस्य चरिते' इति पाठः साहित्यविद्याधरीसंमतः ।

राख्यं रत्नम् । किंभूतम्—जितेन्द्रियचयं जित इन्द्रियचय इन्द्रियसमूहो येन । तस्य श्रीहर्षस्य चिन्तामणिमन्त्रस्य चिन्तनमनुध्यानं जपादिकं तस्य फले शृङ्गारभङ्ग्या शृङ्गाररचनाविशेषेण चारुणि रमणीये शृङ्गाररसप्रधाने नैषधीयं नलसंबन्धि चरितं चरित्रं यस्मिन्नेवंविधे महाकाव्येऽयमादिः प्रथमः सर्गो गतः समाप्तः । चिन्तामणिमन्त्रचिन्तनसामर्थ्यादेवंविधं काव्यं कृतमिति भावः । शार्दूलविक्रीडितं वृत्तम् । नैषधसंबन्धि नैषधीयम् 'वृद्धाच्छः' । छन्दांस्यलंकाराश्चात्र नोक्ताः । लक्षणग्रन्थगौरवभयात् । ते तु सुधिया ग्रन्थान्तराज्ज्ञातव्याः ॥

इति श्रीवेदरकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृतौ नैषधीयप्रकाशे प्रथमः सर्गः समाप्तः ॥

---

## द्वितीयः सर्गः ।

हंसमुखेन भैमीवर्णनार्थं द्वितीयं सर्गमारभते—

**अधिगत्य जगत्यधीश्वरादथ मुक्तिं पुरुषोत्तमात्ततः ।**
**वचसामपि गोचरो न यः स तमानन्दमविन्दत द्विजः ॥१॥**

अधिगत्येति ॥ अथ मोचनानन्तरं स द्विजो हंसः तमानन्दं लोकोत्तरं हर्षमविन्दत लेभे । तं कम्—य आनन्दो वचसामपि गोचरो विषयो न । वर्णयितुमशक्य इत्यर्थः । किंकृत्वा—ततस्तस्माज्जगत्याः पृथ्व्या अधीश्वरात्स्वामिनः पुरुषोत्तमात्पुरुषश्रेष्ठान्नलान्मुक्तिं मोचनमधिगत्य प्राप्य । यथा द्विजो ब्राह्मणो जगति लोके अधीश्वरात्सर्वोत्कृष्टात्पुरुषोत्तमाच्छ्रीविष्णोः सकाशात्तत्प्रसादान्मुक्तिं मुक्तिसाधनं संसारमोचनं च ज्ञानं प्राप्य वागगोचरम्, अपिशब्दान्मनसोऽप्यगोचरमानन्दं ब्रह्मस्वरूपं प्राप्नोति । 'यतो वाचो निवर्तन्ते' इति, 'आनन्दं ब्रह्मणो रूपम्' इति च श्रुतेः । ज्ञानान्मोक्ष इति । 'जगती जगति छन्दोविशेषेऽपि क्षितावपि', 'दन्तविप्राण्डजा द्विजाः' इत्यमरः । 'न निर्धारणे' इति निषेधात्षष्ठीसमासो न । पुरुषेषूत्तम इति निर्धारणसप्तमीसमास एव । स्वरविशेषदर्शनात् । लाभार्थो विदिः स्वरितेत् । मुचादिः । सर्गेऽस्मिन् 'अश्रान्त–' इति यावद्वैतालीयं छन्दः[1] ॥

**अधुनीत खगः स नैकधा तनुमुत्फुल्लतनूरुहीकृताम् ।**
**करयन्त्रणदन्तुरान्तरे व्यलिखच्चञ्चुपुटेन पक्षती ॥ २ ॥**

अधुनीतेति ॥ स खगो हंसस्तनुं शरीरं नैकधा नैकप्रकारमधुनीताकम्पयत् । किंभूतां तनुम्—उत्फुल्लानि विकसितानि तनूरुहाणि रोमाणि यस्यां सा, अनुत्फुल्लतनूरुहा

---

१ अत्रानुप्रासरूपकालंकारौ' इति **साहित्यविद्याधरी** । २ 'अत्रानुप्रासश्लेषालंकारौ' इति **साहित्यविद्याधरी** । 'अत्राभिधायाः प्रकृतार्थमात्रनियन्त्रणादुभयश्लेषानुपपत्तेर्भेदान्तरानवकाशाल्लक्षणायाश्च मुख्यार्थबाधमन्तरेणासंभवाद्ध्वनिरेवायम् । ब्राह्मणस्य विष्णोर्मोक्षानन्दप्राप्तिलक्षणार्थान्तरप्रतीतेर्न श्लेषः प्रकृताप्रकृतोभयगतः' इति **जीवातुः** ।

उत्फुल्लतनूरुहा कृता ताम्। च्विः। तथा—चञ्चुपुटेन पक्षती पक्षमूले व्यलिखत्समीचकार। किंभूते पक्षती—करयन्त्रणेन नलहस्तनियमनेन धारणेन दन्तुरं निम्नोन्नतमन्तरं मध्यं ययोस्ते। (उत्फुल्लेति) 'उत्फुल्लसंफुल्लयोरुपसंख्यानम्' इति साधुः। दन्तुरेति 'दन्त उन्नत उरच्'। अत्र तून्नतत्वमात्रम्। पक्षती इत्यत्र 'पक्षात्तिः' इति तिः॥

**अयमेकतमेन पक्षतेरधिमध्योर्ध्वगजङ्घमङ्घ्रिणा।**
**स्खलनक्षण एव शिश्रिये द्रुतकण्डूयितमौलिरालयम्॥ ३॥**

अयमिति॥ अयं हंसः स्खलनक्षण एव मोचनसमय एवालयं नीडं शिश्रियेऽभजत्। किंभूतः—पक्षतेः पक्षमूलस्याधिमध्यं मध्ये ऊर्ध्वगोर्ध्वगामिनी जङ्घा यस्मिन्कर्मणि तद्यथा तथा एकतमेनैकेनाङ्घ्रिणा चरणेन द्रुतं शीघ्रं कण्डूयितो मौलिर्मस्तकं येन। हंसजातिः। एकतमेनेति 'स्वार्थेऽपि तमबादयः' इति वचनात्तमप्[1]॥

**स गरुद्वनदुर्गदुर्ग्रहान्कटु कीटान्दशतः सतः क्वचित्।**
**नुनुदे तनुकण्डु पण्डितः पटुचञ्चूपुटकोटिकुट्टनैः॥ ४॥**

स इति॥ स हंसः पटु कीटाद्यपनयने समर्थं चञ्चूपुटं तस्य कोटिरग्रभागस्तेन कुट्टनानि घट्टनानि तैः कीटान् तनुकण्डु तन्वी स्वल्पा कण्डूर्यस्यां क्रियायाम्। यथा तथा नुनुदे स्फोटयामास। किंभूतः—पण्डितः कण्डूयने कुशलः। किंभूतान्—गरुद्वनं पक्षवृन्दं तल्लक्षणं दुर्गं तत्र दुर्ग्रहान्धर्तुमशक्यान्। अत एव—कटु तीक्ष्णं पीडाकारि यथा तथा दशतः खादतः। तथा—क्वचिन्निर्हारयितुमशक्ये शरीरे देशे सतो विद्यमानान्। अन्योऽपि पर्वतदुर्गदुर्ग्रहानुपद्रवकारकान्मारणेन नुदति। नुनुदे इति स्वरितेत्त्वादात्मनेपदम्[2]॥

**अयमेत्य तडागनीडजैर्लघु पर्यव्रियताथ शङ्कि ।**
**उदडीयत वैकृतात्करग्रहजादस्य विकस्वरस्वरैः॥ ५॥**

अयमेत्येति॥ अयं हंसस्तडागस्य नीडजाः पक्षिणस्तैरेत्यागत्य लघु शीघ्रं पर्यव्रियत वेष्टितः। अथानन्तरमस्य करग्रहजान्नलस्य हस्तग्रहणजाताद्वैकृताद्विकाराच्छङ्कितैस्त्रस्तैः अत एव विकस्वरस्वरैरुच्चस्वरैः पक्षिभिरुदडीयत उड्डीनम्। एषा पक्षिजातिः। वैकृतं दन्तुरपक्षत्वात्। तीर्थादौ करग्रहणार्थं कैश्चित्कश्चन परितो वेष्ट्यते। अथ बलिग्रहणजात्कलहादेः शङ्कितैरुच्चैः स्वरैर्गम्यते। 'लघु क्षिप्रम्' इत्यमरः। वैकृतात्। स्वार्थेऽण्। 'स्थेशभास—' इति वरचि विकस्वरः[4]॥

**वहतो बहुशैवलक्ष्मतां धृतरुद्राक्षमधुव्रतं खगः।**
**स नलस्य ययौ करं पुनः सरसः कोकनदभ्रमादिव॥ ६॥**

---

१ 'अत्र स्वभावोक्तिरलंकारः' इति जीवातुसाहित्यविद्याधर्यौ। २ 'अत्रापि स्वभावोक्तिरलंकारः' इति साहित्यविद्याधरी। ३ 'अत्र स्वभावोक्तिः श्लेषश्चालंकारौ। शब्दालंकारस्तु छेकानुप्रासः' इति साहित्यविद्याधरी। ४ 'अत्र जातिरुक्तिर्लेशानुप्रासश्चालंकारः। करग्रहजादिति श्लिष्टम्' इति साहित्यविद्याधरी।

वहत इति ॥ स खगो हंसः सरसः सकाशान्नलस्य करं पुनर्ययौ। कस्मादिव—कोकनदभ्रमादिव। रक्तोत्पलभ्रान्तेरिव। सरसः पल्वलस्य कोकनदभ्रमादिवेति वा। नलकरस्य रक्तत्वात्कोकनदभ्रान्तिः। रक्तोत्पलं च हंसानां प्रियमित्युत्प्रेक्षा। किंभूतस्य नलस्य सरसश्च—बहूनि शिवसंबन्धीनि लक्ष्माणि त्रिपुण्ड्रादीनि यस्य तस्य भावस्तत्ता तां वहतो धारयतः। शिवे भक्तिर्येषां ते शैवाः, तत्संबन्धीनि वा। सरःपक्षे—बहूनि शैवलानि यस्यां सा बहुशैवला क्ष्मा पृथ्वी यस्मिंस्तस्य भावस्तत्ता तां वहतः। शिवं कल्याणं तत्संबन्धीनि शुभसूचकानि लक्ष्माणि सामुद्रिकोक्तानि मत्स्यादीनि यस्येति वा। किंभूतं करम्—धृतं रुद्राक्षाणां मधुतुल्यं समीचीनं (वा) व्रतं नियमो येन, शैवत्वाद्रुद्राक्षा एव मधुव्रता भ्रमरा येनेति वा। रुद्राक्षधारणं नियमेन करोति, अन्यचिह्नधारणे नियमो नेति न पौनरुक्त्यम्। कोकनदमपि रुद्राक्षसदृशभ्रमरयुक्तम्। न क्षमन्त इत्यक्षमाः, रुद्रस्य अक्षमाः। कर्मषष्ठ्या समासः। तान्धुनोति कम्पयति रुद्राक्षमधु तच्च तद्व्रतं च। धृतं तद्येनेति वा। शिवद्रोहिपराभवकारिणमित्यर्थः। अनेन पौनरुक्त्यशङ्कापि निरस्ता। रवणं रुत् धृता रुद्यैस्ते धृतरुतः सशब्दाः, रः अग्निस्तद्वदक्षीणि पिङ्गलानि नेत्राणि येषां ते राक्षाः एवंभूता भ्रमरा यत्रेति वा। अर्थात्कोकनदविशेषणम्। रशब्दोऽग्निवाची आगमशास्त्रे। तथा 'रः पावके च तीक्ष्णे च' इति विश्वः। शैवेत्यत्र 'तस्येदम्' इति 'भक्तिः' इति वाण्। रुदिति संपदादित्वात्क्विप्। राक्षेति 'बहुव्रीहौ सक्थ्यक्ष्णोः–' इति षच्। रुद्राक्षमान्धूनोतीति दीर्घान्तात् 'क्विप् च' इति क्विप्। व्रतविशेषणत्वान्नपुंसकत्वाद्ध्रस्वत्वम्[१] ॥

**पतगश्चिरकाललालनादतिविश्रम्भमवापितो नु सः।**
**अतुलं विदधे कुतूहलं भुजमेतस्य भजन्महीभुजः ॥ ७ ॥**

पतग इति ॥ एतस्य महीभुजो राज्ञो भुजं भजन्नाश्रयन्स पतगो हंसः अतुलमनुपमं कुतूहलं विदधे चकार। पुनरागमनं कौतूहले हेतुः। नु वितर्के। चिरकालं लालनात्सान्त्वनादतिविश्रम्भमतिविश्वासमवापितः प्रापित इव। अनु पश्चादेतस्य भुजं भजन्निति वा। सन्निति पाठे अवापितः सन्। अनु पश्चात्। अन्योऽपि बहुकालं पोषितो विश्वासं प्राप्तः स्वामिनं स्वगुणेन कुतूहलिनं करोति[२] ॥

**नृपमानसमिष्टमानसः स निमज्जत्कुतुकामृतोर्मिषु।**
**अवलम्बितकर्णशष्कुलीकलसीकं रचयन्नवोचत ॥ ८ ॥**

नृपेति ॥ इष्टं मानसं सरो यस्य स हंसः अवोचदुवाच। किं कुर्वन्—कुतुकामृतोर्मिषु कौतूहललक्षणामृततरङ्गेषु निमज्जद्ब्रुडन्नृपमानसं नलान्तःकरणमवलम्बिते कर्णशष्कुल्यावेव कलस्यौ येन एवंविधं रचयन्। सावधानं कुर्वन्नित्यर्थः। राज्ञो मनः स्व-

१ 'अत्र बहुशैवल–' इत्यादौ शब्दश्लेषः तदनुप्राणिता 'रुद्राक्षमधुव्रतम्' इत्युपमागतोत्प्रेक्षा चेयं कोकनदभ्रमादिव इत्युत्प्रेक्षेति संकरः।' इति जीवातुः। २ 'अत्रोत्प्रेक्षावृत्त्यनुप्रासयोः शब्दार्थालंकारयोस्तिलतण्डुलवत्संसृष्टिः। 'एकद्वित्र्यादिवर्णानां पुनरुक्तिर्भवेद्यदि। संख्यानियममुल्लङ्घ्य वृत्त्यनुप्रास ईरितः॥' इति' इति जीवातुः।

वचनश्रवणोत्सुकं कुर्वन्नुवाचेति भावः। अन्योऽप्यूर्मिषु मज्जत इष्टस्य कलसमवलम्बनं दत्ते। कर्णाकारो वाद्यविशेषः शष्कुली। मन एव मानसम्। प्रज्ञादित्वादण्। 'मानसं सरसि स्वान्ते' 'अमृतं यज्ञशेषे स्यात्पीयूषे सलिले' इति विश्वः। कलसीकम् 'नद्यृतश्च' इति कप्। 'न कपि' इति ह्रस्वनिषेधः॥

किमवोचदित्याह—

**मृगया न विगीयते नृपैरपि धर्मागममर्मपारगैः।**

**स्मरसुन्दर मां यदत्यजस्तव धर्मः सदयोदयोज्ज्वलः॥ ९॥**

मृगयेति॥ धर्मागमा धर्मशास्त्राणि तेषां मर्म रहस्यं तस्य पारं गच्छन्तीत्येवंभूतैरपि नृपै राजभिर्मन्वादिभिः मृगया पापर्धिः न विगीयते निन्द्यते, अपितु क्रियत एव। एवं सत्यपि हे स्मरवत्सुन्दर, त्वं मां यदत्यजः स तव दयोदयोज्ज्वलो धर्मः दयाया उदयेनोत्पत्त्या उज्ज्वलः शोभमानः। सदयः सन् अयः शुभावहविधिर्यस्य। उपकरिष्यमाणत्वात्। तथा—दयोज्ज्वल इति वा। दयोदयेन सह वर्तमानः। अत एव उज्ज्वल इति वा। मन्मोचने दयां विनान्यत्कारणं नास्तीत्यर्थः। स्मरेति भिन्नम्। हे सुन्दर, त्वं स्मर विचारय। वाक्यार्थः कर्म। नृपैः क्रियमाणा मृगया धर्मागममर्मपारगैरपि न निन्द्यत इति वा। पारगैः 'अन्तात्यन्ताध्व–' इति डः॥

मृगयाया अनिन्दने कारणमाह—

**अबलस्वकुलाशिनो झषान्निजनीडद्रुमपीडिनः खगान्।**

**अनवद्यतृणार्दिनो मृगान्मृगयाघाय न भूभुजां घ्नताम्॥१०॥**

अबलेति॥ मृगया भूभुजां राज्ञामघाय पापाय न भवति। कथमित्यत आह—किंभूतानां भूभुजाम्—अबलं निर्बलं स्वकुलं च तदश्नन्त्येवंशीलाञ्झषान्मीनान् घ्नतां मारयताम्। तथा—निजाः स्वीया ये नीडद्रुमा निवासस्थानवृक्षास्तान्पीडयन्त्येवंशीलान्खगान्पक्षिणो घ्नताम्। तथा—अनवद्यं निरपराधं तृणं तद् अर्दन्ति पीडयन्त्येवंशीलान्मृगान्घ्नताम्। 'अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः' इति स्मृतेस्तरुणतृणादेरपि प्राणित्वात्तद्वधस्तु दोषाय। परं दुष्टनिग्रहो राज्ञां धर्म एवेति भावः। अबलान्बलिनो भक्षयन्तीति मत्स्यानां जातिस्वभावः। अवद्येति 'अवद्यपण्य–' इति साधुः। पश्चाद्बहुव्रीहिस्तत्पुरुषो वा। पूर्वश्लोके मृगयादोषाभावे स्मृतिं प्रमाणमुक्त्वात्र युक्तिमप्यवदत्॥

**यदवादिषमप्रियं तव प्रियमाधाय नुनुत्सुरस्मि तत्।**

**कृतमातपसंज्वरं तरोरभिवृष्यामृतमंशुमानिव॥ ११॥**

यदिति॥ हे राजन्, अहं तव यदप्रियं निन्दाद्यवादिषमुक्तवानस्मि प्रियमाधाय कृत्वा

---

१ 'अत्रानुप्रासरूपकावलंकारौ। अमृतमिति श्लिष्टम्' इति साहित्यविद्याधरी। २ 'अत्र काव्यलिङ्गमलंकारः' इति साहित्यविद्याधरी। ३ 'अत्रानुप्रासकाव्यलिङ्गक्रियादीपकालंकाराः। काव्यलिङ्गे 'अबलस्वकुलाशिनः' इत्यादिना विशेषणद्वारेण पदार्थगत्या हेतुरुक्तः, अत्र घ्नतामिति क्रियापदत्वात्क्रियादीपकम्' इति साहित्यविद्याधरी।

तदप्रियं नुनुत्सुर्निराकर्तुमिच्छुरसि। तत्र दृष्टान्तमाह—अंशुमान्सूर्यस्तरोर्वृक्षस्य आतपेन कृतं संज्वरं पीडाममृतं जलमभिवृष्याभितो वर्षित्वा यथा नुदतीत्यर्थः। अनेन दृष्टान्तेनातिशयितं प्रियं करिष्यामीति सूच्यते[1]॥

**उपनम्रमयाचितं हितं प्रतिहर्तुं न तवापि सांप्रतम्।**

**करकल्पजनान्तराद्विधेः शुचितः प्रापि स हि प्रतिग्रहः॥१२॥**

उपेति॥ अयाचितमप्रार्थितमुपनम्रमुपस्थितं हितं प्रियं परिहर्तुं त्यक्तुं तवापि सार्वभौमस्यापि न सांप्रतं न युक्तम्। हि यतः करकल्पम् ईषदसमाप्तः करः जनान्तरं अन्यो जनो मल्लक्षणः, करकल्पं जनान्तरं यस्यैवंविधाच्छुचितो निर्मलाच्छोभनाद्विधेर्दैवात्स प्रतिग्रहस्त्वया प्रापि प्राप्तः। सर्वं हि शुभाशुभं दैवात्प्राप्यते। यद्दैववशाद्भवति तत्केनापि निराकर्तुं न शक्यते। करेण हि दीयते। यद्वा विधेर्दैवस्य हस्तभूताज्जनान्तरादेतादृशः प्रतिग्रहो राज्ञो दोषाय न। 'अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः' इति याज्ञवल्क्यः[2]॥

स्वगर्वं परिहरति—

**पतगेन मया जगत्पतेरुपकृत्यै तव किं प्रभूयते।**

**इति वेद्मि न तु त्यजन्ति मां तदपि प्रत्युपकर्तुमर्तयः॥ १३॥**

पतगेनेति॥ पतगेन पक्षिणा जगत्पतेर्भुवनाधिपतेस्तव नलस्योपकृत्यै उपकाराय प्रभूयते किं समर्थेन भूयतेऽपि तु नेति यद्यपि वेद्मि जानामि तदपि तथापि प्रत्युपकर्तुं प्रत्युपकारार्थं अर्तयः कथमस्योपकरोमीत्युत्कण्ठादरः, पीडा वा मां ननु नैव त्यजन्ति। असमर्थमपि प्रेरयन्तीत्यर्थः[3]॥

उपकर्तुं शक्यते न वेति विचारो मास्तु, किं तूपकर्तुः प्रत्युपकर्तव्यमेवेति विधिरस्तीत्याह—

**अचिरादुपकर्तुराचरेदथवात्मौपयिकीमुपक्रियाम्।**

**पृथुरित्थमथाणुरस्तु सा न विशेषे विदुषामिह ग्रहः॥ १४॥**

अचिरादिति॥ अथवा पक्षान्तरे। यः पुरुषः कश्चनोपकर्तुरुपकारकस्यात्मौपयिकीमात्मोपायादागताम्। आत्मोपायसाध्यामित्यर्थः। एवंभूतामुपक्रियामुपकारमचिराज्झटिति आचरेत्कुर्यात्। जीवनस्य सत्वरत्वादचिरादित्युक्तम्। इत्थं विधौ सति सा उपक्रिया पृथुर्महती अथ अथवा अणुः अल्पा वास्तु तिष्ठतु। इह इति विशेषे महत्त्वाल्पत्वलक्षणे विदुषां ज्ञातॄणां ग्रहो निर्बन्धो नास्ति। उपकारस्य स्वौद्धत्यपरिहार एव तात्पर्यम्। उपाय एवौपयिकीति विनयादिषु 'उपायाद्ध्रस्वत्वं च' इति पाठात्स्वार्थे ठकि तदन्तात् 'तत आगतः' इत्यणन्तत्वाद्वा ङीप्। 'युक्तमौपयिकं लभ्यम्' इत्यमरः[4]॥

---

१ 'अत्र बिम्बप्रतिबिम्बभावेन दृष्टान्तोपमापरिवृत्तयोऽलंकारः' इति साहित्यविद्याधरी। २ 'अत्र काव्यलिङ्गमलंकारः' इति साहित्यविद्याधरी। ३ 'अत्रानुप्रासो हेतुश्चालंकारौ' इति साहित्यविद्याधरी। ४ 'अत्र छेकानुप्रासोऽप्रस्तुतप्रशंसा चालंकारौ' इति साहित्यविद्याधरी।

वचनप्रसङ्गार्थमाह—

**भविता न विचारचारु चेत्तदपि श्रव्यमिदं मदीरितम् ।**
**खगवागियमित्यतोऽपि किं न मुदं धास्यति कीरगीरिव॥१५॥**

भवितेति ॥ यद्यपि इदं मदीरितं मद्वचनं विचारचारु विचारविषये मीमांसासहं चेन्न भविता भविष्यति। अहं लोकोत्तरमुपकारं करिष्यामीति सत्यमेव, तथापि त्वं मिथ्या चेन्मन्यसे, तथापि मदीयं वचः श्रव्यं श्रवणार्हं भवत्येव। विचारचारु चेन्न, कथं श्रव्यमित्याशङ्कायामाह—इयं खगवाक्पक्षिणो वाक् पक्षी मनुष्यवाचा वदतीत्यतोऽपि हेतोर्मद्वचनं किं मुदं संतोषं न धास्यति करिष्यति, अपितु करिष्यत्येव। इष्टसाधकत्वात्। अपिरेवार्थः । केव—शुकवागिव। श्रव्यमर्हार्थे 'अचो यत्' इति यत्, 'सार्वधातुकार्धधातुकयोः' इति गुणः, 'धातोस्तन्निमित्तस्यैव' इति वान्तादेशः ॥

तदेवाह—

**स जयत्यरिसार्थसार्थकीकृतनामा किल भीमभूपतिः ।**
**यमवाप्य विदर्भभूः प्रभुं हसति द्यामपि शक्रभर्तृकाम्[१] ॥१६॥**

स इति ॥ किल प्रसिद्धौ स भीमसंज्ञको भूपती राजा जयति सर्वोत्कर्षेण वर्तते। किंभूतः—अरिसार्थे वैरिसमूहे सार्थकीकृतमन्वर्थकीकृतं नाम स्वसंज्ञा येन। बिभ्यत्यस्माद्वैरिण इति (नत्वन्ये, इति) भीमः। 'भीमादयोऽपादाने' इति साधुत्वम्। स कः—विदर्भभूर्वराडभूः यं पतिमवाप्य शक्रभर्तृकामपीन्द्रपतिकामपि द्यां दिवं हसति। तत्तुल्या भवतीत्यर्थः। शक्नुते तपस्विभ्योऽपीति शक्रस्तद्भर्तृका द्यौः, अहं तु भीमभर्तृकेति हासहेतुः। शक्यते जेतुमिति वा। तस्मात्कोऽपि न बिभेतीति। अर्थेन सह वर्तमानं सार्थकम्। 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः, 'वोपसर्जनस्य' इति सः, 'शेषाद्विभाषा' इति कप्। ततश्च्विः। शक्रभर्तृकाम् 'नद्यृतश्च' इति कप् ॥

भैम्या लोकोत्तरे गुणोत्कर्षे मिथ्यात्वनिरासार्थं पुराणप्रसिद्धमितिहासं सूचयन्नाह—

**दमनादमनाक्प्रसेदुषस्तनयां तथ्यगिरस्तपोधनात् ।**
**वरमाप स दिष्टविष्टपत्रितयानन्यसदृग्गुणोदयाम् ॥ १७ ॥**

दमनादिति ॥ हे राजन्, स भीमः दमनादेतन्नाम्नस्तपोधनादृषेर्वरदानसमर्थाद् अमनागत्यर्थं प्रसेदुषः प्रसन्नात्तथ्यगिरोऽप्रतारकादेवंभूतात् तनयां वरं कन्यालक्षणमभीप्सितमाप प्राप्तवान्। किंभूताम्—दिष्टः कालः विष्टपं भुवनमनयोस्त्रितये कालत्रये, भुवनत्रये चानन्यसदृगन्यसदृशो न भवत्येवंभूतः सौन्दर्यौदार्यादिगुणोदयो यस्यास्ताम्। भूतभविष्यद्वर्तमानकाले लोकत्रयेऽपीदृक्सौन्दर्यादिगुणवती कापि नास्तीति भावः। दिष्टस्तेनैव मुनिना दत्तो विष्टपत्रितयेऽनन्यसदृशो गुणोदयो यस्यै तामिति वा। 'कालो

---

१ 'अत्रानुप्रासोपमालंकारौ' इति साहित्यविद्याधरी। २ 'अत्रानुप्रासोपमालंकारौ' इति साहित्यविद्याधरी। अत्र विदर्भभुवो(ऽपि) द्युहासासंबन्धेऽपि संबन्धोक्तेरतिशयोक्तिः' इति जीवातुः।

दिष्टः' इत्यमरः । दमनात् 'सहितपिदमः संज्ञायाम्' इति ल्युः । प्रसेदुषः प्र-सदो लिटः 'भाषायां सदवसश्रुवः' इति क्वसुः । अनन्यसदृक् 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवद्भावः ॥

**भुवनत्रयसुभ्रुवामसौ दमयन्ती कमनीयतामदम् ।**
**उदियाय यतस्तनुश्रिया दमयन्तीति ततोऽभिधां दधौ ॥ १८ ॥**

भुवनेति ॥ यतो यस्मात्कारणादसौ भीमतनया भुवनत्रये सुभ्रुवः सुन्दर्यस्तासां कमनीयतया यो मदः सौन्दर्येण यो गर्वस्तं तनुश्रिया शरीरसौन्दर्येण दमयन्ती ग्लपयन्ती शमयन्ती वोदियायोत्पन्ना । ततस्तस्मात्कारणात् 'दमयन्ती' इत्यभिधां सार्थकं नाम दधे बभार । 'भूसूधूभ्रस्जिभ्यश्छन्दसि' इति क्युनि साधितस्य भुवनशब्दस्य बाहुलकाद्भाषायां प्रयोगः । 'अणावकर्मकात्-' इति कर्त्रभिप्राये क्रियाफले यत्परस्मैपदं विहितं तस्यैव 'न पादमि-' इत्यादिना निषेधादणावकर्मकत्वे च तत्रैव चित्तवत्कर्तृकत्वाभावात्तेन परस्मैपदाप्राप्तेर्निषेधाशङ्काया अभावाच्चाकर्त्रभिप्राये यथाप्राप्तं परस्मैपदं भवत्येवेति दमयन्तीत्यत्र शता युज्यते ॥

**श्रियमेव परं धराधिपाद्गुणसिन्धोरुदितामवेहि ताम् ।**
**व्यवधावपि वा विधोः कलां मृडचूडानिलयां न वेद कः ॥ १९ ॥**

श्रियमिति ॥ हे राजन्, त्वं तां भैमीं श्रियमेव लक्ष्मीमेवावेहि जानीहि । परमयं विशेषः—गुणसिन्धोर्गुणसमुद्राद्धराधिपात्पृथ्वीपतेरुदितामुत्पन्नाम् । लक्ष्मी समुद्रादुत्पन्ना, इयं तु गुणसमुद्राद्राज्ञ इति विशेषः । अप्रसिद्धस्य ज्ञापनं क्रियते न तु प्रसिद्धस्येत्याह—वा प्रसिद्धौ । व्यवधिर्व्यवधानं तस्यां[3] सत्यामपि मृडो महादेवस्तस्य चूडा मौलिः सा निलयः स्थानं यस्याः साः तां विधोश्चन्द्रस्य कलां को न वेद जानाति, अपि तु सर्वोऽपि । ईश्वरस्याप्रत्यक्षत्वेऽपि तन्मौलिस्थितां चन्द्रकलां सर्वोऽपि वेत्ति, तथा व्यवधानेऽपि त्वमपि तां वेत्सीति भावः । इणो लोटि हेरपित्त्वाद्गुणाभावे एजादित्वाभावाद् 'एत्येधति-' इति वृद्ध्यभावेन 'आद्गुणः' आङ्प्रश्लेषेऽपि 'ओमाङोश्च' इति पररूपप्राप्तेरवेहीत्येव रूपम्[4] ॥

**चिकुरप्रकरा जयन्ति ते विदुषी मूर्धनि साबिभर्ति यान् ।**
**पशुनाप्यपुरस्कृतेन तत्तुलनामिच्छतु चामरेण कः ॥ २० ॥**

---

१ 'अत्रानुप्रासव्यतिरेकालंकारौ' इति **साहित्यविद्याधरी** । २ 'अत्रोत्प्रेक्षालंकारः' इति **साहित्यविद्याधरी** । ३ 'व्यवधिशब्दस्य स्त्रीत्वे मानाभावेन तस्यामिति व्याख्यानमसंगतम् । ४ 'अत्र रूपकमाक्षेपश्चालंकारौ । आक्षेपलक्षणं **रुद्रटे**नोक्तम् 'वस्तु प्रसिद्धमिति यद्विरुद्धमिति वास्य वचनमाक्षिप्य । अन्यत्तथात्वसिद्ध्यै यत्र ब्रूयात्स आक्षेपः' इति **साहित्यविद्याधरी** । 'यथा हरशिरोगतापि कला चन्द्रकलैव तथा भीमभवनोदिताप्येषा श्रीरेवेति सौन्दर्यातिशयोक्तिः । अत्र श्रीकलयोर्नृपमृडौ वाक्यद्वये बिम्बप्रतिबिम्बभावेन सामान्यधर्मवत्तया निर्दिष्टौ इति दृष्टान्तालंकारः । 'यत्र वाक्यद्वये बिम्बप्रतिबिम्बतयोच्यते । सामान्यधर्मः शास्त्रज्ञैः स दृष्टान्तो निगद्यते' इति लक्षणात्' इति **जीवातुः** ।

चिकुरेति ॥ हे राजन्, ते चिकुरप्रकराः केशसमूहा जयन्ति सर्वोत्कर्षेण वर्तन्ते। ते के—सा विदुषी पण्डिता भैमी यांश्चिकुरप्रकरान् (मूर्धनि) आबिभर्ति धारयति आभरणं करोति वा। चामरेण साम्ये सति सर्वोत्कृष्टत्वं कथमित्यत आह—पशुना चमरसंज्ञकेनाप्यपुरस्कृतेन पश्चात्कृतेन चामरेण तत्तुलनां तेषां केशानां तुलनां साम्यं क इच्छतु न कोऽपि। चमराणां हीनस्थानधारणात्तत्तुलना नास्ति। अथच ज्ञात्रा ये मस्तके ध्रियन्ते पूज्यन्ते तेषां मूर्खेणाप्यपूजितेनासता सह साम्यं कोऽभिलष्येत्। अतस्तत्केशानां सर्वोत्कर्षता। विदुषीति 'विदेः शतुर्वसुः' 'उगितश्च' इति ङीप् 'वसोः संप्रसारणम्'। तुलनाम् 'ण्यास–' इति युच्। संज्ञापूर्वकविधेरनित्यत्वाल्लघूपधगुणाभावः ॥

**स्वदृशोर्जनयन्ति सान्त्वनां खुरकण्डूयनकैतवान्मृगाः।**
**जितयोरुदयत्प्रमीलयोस्तदखर्वेक्षणशोभया भयात् ॥ २१ ॥**

स्वदृशोरिति ॥ हे राजन्, मृगाः खुरेण कण्डूयनं कण्डूपनयनं तदेव व्याजस्तस्मात्स्वदृशोः स्वनेत्रयोः सान्त्वनामाश्वासनं जनयन्ति कुर्वन्ति। यतस्तस्या भैम्या अखर्वेक्षणशोभया विशालनेत्रशोभया जितयोः पराभूतयोः। अत एव भयादिवोदयत्प्रमीलयोर्जायमानतन्द्रीकयोः। लुप्तोत्प्रेक्षा। यथा केनचिज्जितं भीतमन्यमपि कश्चित्करपरामर्शादिना सान्त्वयति तथा मृगा अपि स्वनेत्रे सान्त्वयन्ति। 'तन्द्री प्रमीला' इत्यमरः। 'खर्वो ह्रस्वश्च वामनः' इत्यमरः। उदयदिति 'इ गतौ' ॥

**अपि लोकयुगं दृशावपि श्रुतदृष्टा रमणीगुणा अपि।**
**श्रुतिगामितया दमस्वसुर्व्यतिभाते सुतरां धरापते ॥ २२ ॥**

अपीति ॥ हे धरापते पृथ्वीपते, दमस्वसुर्भैम्या लोकयुगमपि मातृकुलपितृकुललक्षणं श्रुतिगामितया लोकाकर्णनविषयत्वेन जगत्प्रसिद्धत्वेन सुतरां व्यतिभाते। परस्परोत्कर्षेण विनिमयेन वा भासत इत्यर्थः। इदं भैमीमातृकुलमिति जगद्विख्यातत्वम् (तेन) भैमीमातृकुलस्य शोभनं तद्भैमीपितृकुलेनाङ्गीकृतम्। एवं भैमीपितृकुलमिदमिति जगद्विख्यातत्वम् (तेन) भैमीपितृकुलस्य शोभनं तद्भैमीमातृकुलेनाङ्गीकृतमिति विनिमयः। भैमीसंबन्धेन पितृकुलवन्मातृकुलं मातृकुलवत्पितृकुलं शोभते। सादृश्यं तु तात्पर्यार्थः। तच्च सादृश्यं श्रुतिगामितया विशेष्यते। तच्च श्रुतिगामित्वलक्षणं सादृश्यं मातृकुलस्य पितृकुलापेक्षया पितृकुलस्य च मातृकुलापेक्षतया नतु दृगाद्यपेक्षया। एवं दृगादीनामपि सजातीयापेक्षयैव श्रुतिगामित्वलक्षणं सादृश्यमङ्गीकरणीयं नतु लोकयुगाद्यपेक्षया। तथा—दमस्वसुर्दृशावपि नेत्रे अपि श्रुतिगामितया आकर्णदेशविशालत्वेनातितरां विनिमयेन भाते शोभेते इति द्विवचनम्। दक्षिणनयनस्य श्रुतिगामित्वेन या शोभा तां वामनयनमङ्गीकरोति। वामनयनस्य च श्रुतिगामित्वेन या

---

१ 'अत्रातिशयोक्तिव्यतिरेकालंकारौ' इति साहित्यविद्याधरी। २ 'अत्र समासोक्तिरपह्नुतिश्चालंकारौ' इति साहित्यविद्याधरी। 'अत्र कैतवशब्देन कण्डूयनमपह्नुत्य सान्त्वनारोपादपह्नवभेदः' इति जीवातुः।

शोभा तां दक्षिणनयनमङ्गीकरोतीत्यत्रापि विनिमयः। श्रुतिगामित्वेन दक्षिणं वाममिव वामं दक्षिणमिवेत्यत्रापि सादृश्य एव तात्पर्यं ज्ञेयम्। तस्या—दमस्वसुः संबन्धी श्रुतदृष्टाः श्रुताः पुराणादौ, दृष्टाः कासुचित्सुन्दरीषु। यद्वा—कासुचित्स्त्रीष्वेव श्रुताः कासुचिद्दृष्टा रमणीगुणाः श्रुतिगामितया लोकाकर्णनविषयत्वेन व्यतिभाते विनिमयेन शोभन्त इति बहुवचनम्। पुराणादावन्यस्त्रीषु वा ये श्रुतास्ते कासुचिद्दृष्टास्ते भैम्यामेव श्रूयन्त इति श्रुतानां दृष्टानां च स्त्रीगुणानां दमस्वसुः संबन्धिनां सर्वेषां श्रुतिगामित्वं विद्यते। ततः श्रुतानां स्त्रीगुणानां दमस्वसुः संबन्धिनां यच्छ्रुतिगामितया शोभनं तद्दृष्टैरङ्गीकृतम्। एवं दृष्टानां शोभनं तच्छ्रुतैरङ्गीकृतमित्यत्रापि यथाकथंचिद्विनिमयः। यथा श्रुता भैमीसंबन्धिनः श्रुतिगामितया शोभन्ते तथा दृष्टा अपि भैमीसंबन्धिनः श्रुतिगामितया शोभन्त इत्यत्रापि सादृश्य एव तात्पर्यम्। श्रुतदृष्टा अपि सर्वे गुणा भैम्यां विद्यन्त इति भावः। सामुद्रिकशास्त्रे श्रुतानां पद्मिन्यादौ दृष्टानामिति वा यथाकथंचिज्ज्ञेयम्। विस्तरभयान्न लिख्यते। 'श्रुतिः श्रोत्रे तथाम्नाये वार्तायां श्रोत्रकर्मणि' इति विश्वः। गामी गम्यादि। आवश्यके ताच्छील्ये वा णिनिः। 'त्वतलोः—' इति पुंवत्। व्यतिपूर्वस्य भातेः 'कर्तरि कर्मव्यतिहारे' इत्यात्मनेपदम्। द्विवचने सवर्णदीर्घत्वे कृते, बहुवचने च 'आत्मनेपदेष्वनतः' इति झस्यादादेशे शब्लुक् टेरेत्वं सर्वत्र। वचनश्लेषः[1]॥

**नलिनं मलिनं विवृण्वती पृषतीमस्पृशती तदीक्षणे।**
**अपि खञ्जनमञ्जनाञ्चिते विदधाते रुचिगर्वदुर्विधम्॥ २३॥**

नलिनमिति॥ तदीक्षणे भैमीनेत्रे पृषतीमञ्जनशलाकामस्पृशती अप्राप्ते अञ्जनानञ्चिते सती नलिनं कमलं मलिनं स्वकान्त्या दूषितं विदधाते कुर्वाते। किंभूते तदीक्षणे—विवृण्वती आत्मानं प्रकाशयन्ती प्रसारयन्ती। ऋजुरीत्या विलोकमाने। अञ्जनाञ्चितेऽञ्जनपूजिते साञ्जने सती तदीक्षणे खञ्जनमपि खञ्जरीटमपि रुचिगर्वेण कान्तिमदेन दुर्विधं दरिद्रं विदधाते। अवतंसीकृतं कमलं कटाक्षावलोकनप्रसृतया स्वकान्त्या मलिनं श्यामं विवृण्वती कुर्वती, तथा—पृषतीं हरिणीमस्पृशती नेत्रविषयेऽगणयन्ती एवंविधे भैमीनेत्रे कज्जलाञ्चिते खञ्जनमिति पूर्ववत्। अञ्जनपूजनात्पूर्वं स्वकान्त्या कमलं जितं, हरिणीनेत्रयोस्तु भैमीनेत्रशोभासंभावनापि नास्ति। अञ्जनपूजनानन्तरं खञ्जनस्य मन्नेत्रसदृशे नान्यस्येति गर्वस्तद्रहितं कुर्वाते इत्यर्थ इति वा, रुचि कान्तिविषये दर्पेण रहितमिति वा। रुचीति भिन्नं पदम्। खञ्जनो हि शुक्लकृष्णोऽतिसरलोऽतिचञ्चलश्च। अतस्तेन साम्यसंभावनायां कज्जलदानानन्तरं तदधिककान्तित्वात्सोऽपि जित इति भावः। मलिनं स्वगतं श्यामं गुणं विलोकनवशाद्विवृण्वती प्रकाशयन्ती नलिनं रुचिगर्वदुर्विधं विदधाते इति वा, मलिनं श्यामं नलिनं नीलोत्पलं रुचिगर्वदुर्विधं विदधाते

---

१ 'अत्र वचनश्लेषक्रियाकारकदीपकसंसृष्टिः' इति **साहित्यविद्याधरी**। 'अत्र लोकयुगादीनां त्रयाणामपि प्रकृतत्वात्केवलप्रकृतविषयतुल्ययोगिताभेदः। 'प्रस्तुताप्रस्तुतानां च केवलं तुल्यधर्मतः। औपम्यं गम्यते यत्र सा मता तुल्ययोगिता॥' इति लक्षणात्' इति **जीवातुः**।

इति वा। सविलासवीक्षणदशायाः पूर्वमेव नीलोत्पलं जितमित्यर्थः । तथा—असंकुचती सती पृषतीं हरिणीं श्यामं नलिनं नीलोत्पलं रुचिगर्वदुर्विधं विदधाते। निर्निमेषत्ववेलायामपि ताभ्यां हरिणी जिता, किं पुनः कटाक्षविक्षेपवेलायामिति वा। अस्मिन्पक्षे दुर्विधा च दुर्विधश्चेति 'नपुंसकमनपुंसकेन–' इति नपुंसकै(कशेषै)-कवद्भावौ। अज्यतेऽनेनेत्यञ्जनम् तेन पूजिते इत्यनेन ल्युडन्तस्य 'अञ्जू व्यक्ति(गति-कान्ति)म्रक्षणेषु' इति धातोरर्थानुसारेण दृशोः स्निग्धनीलरक्तसितवर्णकान्तिचाञ्चल्ययोगः सूचितः। तथाच नलिनादिषु मध्ये कचित्कस्यचिद्गुणस्य सत्त्वाद्दृशोस्तु पूर्वोक्तगुणसद्भावात्ताभ्यां नलिनादीनि जितानीति भावः। 'मलिनं दूषिते कृष्णे' इति विश्वः। अञ्चिते 'अञ्चेः पूजायाम्' इतीटि 'नाञ्चेः पूजायाम्' इति नलोपनिषेधः। अञ्जनाञ्जिते इति पाठे 'अजि भासि' इति चौरादिकस्याञ्जयतेर्निष्ठा। अञ्जनेन भासिते

अधरं किल बिम्बनामकं फलमस्मा[2]दिति भव्यमन्वयम्।
लभतेऽधरबिम्बमित्यदः पदमस्या रदनच्छ[3]दं वदत्॥ २४॥

अधरमिति॥ हे राजन्, अस्या दमयन्त्या रदनच्छदमधरमोष्ठं वददभिदधत् अधरबिम्ब इत्यदःपदमेतत्पदं सुबन्तोऽयं शब्द इत्यतो हेतोर्भव्यं समीचीनमन्वयं संबन्धं लभते प्राप्नोति। इतीति किम्—किल यस्माद्बिम्बनामकं फलमस्मादोष्ठादधरं हीनम्। बिम्बापेक्षयास्याधिकरक्तत्वादमृतयुक्तत्वाच्च अधरं बिम्बं बिम्बसंज्ञकं फलं यस्मादधरबिम्ब इति बहुव्रीहिः, न त्वधर एव बिम्बमिति। अन्यासां तु अधरो बिम्ब इवेति तत्पुरुषः कर्मधारयः। एतस्यास्तु बहुव्रीहौ अर्थतः शब्दतश्च भव्यत्वम्। भैम्यधरो जितबिम्ब इति भाव[4]ः॥

हृतसारमिवेन्दुमण्डलं दमयन्तीवदनाय वेधसा।
कृतमध्यबिलं विलोक्यते धृतगम्भीरखनीखनीलिम॥ २५॥

हृतेति। इन्दुमण्डलं चन्द्रबिम्बं वेधसा ब्रह्मणा दमयन्तीवदनाय भैमीमुखं निर्मातुं हृतसारमिव गृहीतश्रेष्ठभागमिव कृतं मध्ये बिलं छिद्रं यस्यैवंभूतं विलोक्यते दृश्यते

---

१ 'अत्र छेकानुप्रासोऽतिशयोक्तिरलंकारः' इति **साहित्यविद्याधरी**। 'ईक्षणयोर्नलिनमलिनीकरणाद्यसंबन्धेऽपि संबन्धोक्तेरतिशयोक्तिः तया चासमा व्यज्यतेलंकारेणालंकारध्वनिः' इति **जीवातुः**। २—३ 'आभ्याम् रदनच्छदे' इति द्विवचनान्तपाठः **साहित्यविद्याधरी**संमतः। यतो व्याख्यातम् रदनच्छदे ओष्ठौ वदत् प्रतिपादयत्। रदनच्छदशब्दस्य नपुंसकत्वम्। यदुक्तं **प्रतापमार्तण्डा**भिधानकोषे—'गरुत्पक्षश्छदोऽस्त्रियाम्' इति। 'आभ्याम् रदनच्छदे' इति पाठस्तु सर्वथाऽशुद्धः 'ओष्ठोऽधरो रदच्छदः' इति पुंलिङ्गनिर्देशात्' इति **सुखावबोधा**। 'आभ्याम्' इति पाठे रदनच्छदौ वदादिति युक्तः पाठः। छदशब्दस्य पुंलिङ्गत्वात् 'दलं पर्णं छदः पुमान्' इत्यमरः' इति **तिलक**-व्याख्यायामभिहितम्। रदनच्छदे वदन् 'वद स्थैर्ये' स्थिरीभवन्निति सप्तम्यन्तपाठाङ्गीकारश्च। ४ 'अत्रोत्प्रेक्षालंकारः' इति **साहित्यविद्याधरी**। 'अत्र दमयन्तीदन्तच्छदस्य बिम्बाधरीकरणासंबन्धेऽपि संबन्धोक्तेरतिशयोक्तिः। पूर्ववद् ध्वनिः।' इति **जीवातुः**।

तर्क्यैत इत्यर्थः। कलङ्केन हृतसारत्वमुत्प्रेक्षितम्। किंभूतम्—धृतो गम्भीरखन्यां निम्न-गर्ते परभागस्थितस्य खस्याकाशस्य नीलिमा येन। कलङ्को न भवति, किं त्वाकाशनी-लिमा। भैमीमुखं निष्कलङ्कचन्द्रसारतुल्यमिति भावः। वदनाय 'क्रियार्थोपपदस्य च–' इति चतुर्थी। खनीति 'कृदिकारादक्तिनः' इति ङीष् ॥

प्रकारान्तरेण भैमीमुखस्य चन्द्राधिक्यमाह—

**धृतलाञ्छनगोमयाञ्चनं विधुमालेपनपाण्डुरं विधिः।**
**भ्रमयत्युचितं विदर्भजाननीराजनवर्धमानकम् ॥ २६ ॥**

धृतेति ॥ ब्रह्माज्ञया चन्द्रो भ्राम्यति। तत्रोत्प्रेक्षते। विधिर्ब्रह्मा विधुं चन्द्रमुचितं योग्यं विदर्भजा भैमी तस्या आननं तस्य नीराजनार्थमारार्तिकार्थं वर्धमानकमिव वर्ध-मानकं शरावं भ्रमयति। किंभूतं विधुम्—धृतं लाञ्छनमेव कलङ्क एव गोमयाञ्चनं गोमयपूजनं येन। तथा—आलेपनं पिष्टोदकम् ('अईपण' इति लोके प्रसिद्धं) तेनैव पा-ण्डुरम्। चन्द्रस्तन्मुखसादृश्यं न प्रापेति भावः। गोमयलिप्तेन चूर्णादिचिह्नेन शरावेण दृष्टिदोषनिरासार्थं नीराजना क्रियत इति लोकाचारः। 'शरावो वर्धमानकः' इत्यमरः ॥

**सुषमाविषये परीक्षणे निखिलं पद्ममभाजि तन्मुखात्।**
**अधुनापि न भङ्गलक्षणं सलिलोन्मज्जनमुज्झति स्फुटम् ॥२७॥**

सुषमेति ॥ कमलस्य शोभाधिका, भैमीवदनस्य वेति सुषमाविषये परमशोभा-विषये परीक्षणे दिव्येन शोधने निखिलं समस्तं पद्मं पद्मजातं तन्मुखाद्भैमीमुखाद-भाजि पराजयं प्राप्तम्। यतः—भङ्गलक्षणं पराजयचिह्नं सलिलोन्मज्जनं जलादुन्मज्जन-मूर्ध्वभवनमद्यापि नोज्झति स्फुटं व्यक्तमेव न त्यजति। स्फुटमुत्प्रेक्षे वा। जलोन्मज्जनं तस्य स्वाभाविकं भङ्गलक्षणत्वेनोत्प्रेक्षितम्। स्फुटं विकसितमिति पद्मविशेषणं वा। जलदिव्ये धनुर्धरमुक्तं बाणमादाय यावदन्यो धावन्नागच्छति तावद्यः सलिले निमग्न एव तिष्ठति स विजयते, यस्तु ततः पूर्वमेवोन्मज्जति स पराजयत इति भावः। 'सुष-मा परमा शोभा' इत्यमरः। 'सुविनिर्दुर्भ्यः–' इति षत्वम्। अभाजीति कर्मकर्तरि चिण् 'भञ्जेश्च चिणि' इति नलोपः[3] ॥

**धनुषी रतिपञ्चबाणयोरुदिते विश्वजयाय तद्भ्रुवौ।**
**नलिके न तदुच्चनासिके त्वयि नालीकविमुक्तिकामयोः ॥२८॥**

---

१ 'अत्रोत्प्रेक्षालंकारः, अनुप्रासश्च' इति **साहित्यविद्याधरी**। 'अत्र कलङ्कापह्नवेन खनीलिमारोपादपह्नवभेदः। स च कृतमध्यबिलमित्येतत्पदार्थहेतुककाव्यलिङ्गानुप्राणितः। तदपेक्षा चेयं हृतसारमित्युत्प्रेक्षेति संकरः। तया चोपमा व्यज्यत इति पूर्ववद्ध्वनिः' इति **जीवातुः**। २ 'अत्र रूपकं समं चालंकारः। तथा चोक्तम् 'उपमैव तिरोभूतभेदा रूपकमिष्यते। समं योग्यतया योगो यदि संभावितः क्वचित् ॥' इति **साहित्यवि-द्याधरी**। 'अत्र विधुतल्लाञ्छनादेर्नीराजनशरावगोमयत्वादित्वेन रूपणात्सावयवरूपकम्' इति **जीवातुः**। ३ 'अत्रानुमानमतिशयोक्तिरलंकारौ' इति **साहित्यविद्याधरी**। 'उन्मज्जनक्रियानिमित्तेयं भङ्गोत्प्रेक्षा' इति **जीवातुः**।

धनुषी इति ॥ तद्भ्रुवौ भैमीभ्रुवौ विश्वजयाय त्रैलोक्यजयाय रतिपञ्चबाणयोर्धनुषी नोदिते प्रादुर्भूते न इति काक्वा। 'नु' इति पाठे वितर्के। तथा—तस्या भैम्या उच्चनासिके रन्ध्रद्वयोपलक्षिते नासिके त्वयि विषये नालीकौ नलिकाप्रेर्यमाणलघुशरौ तयोर्विमुक्तिकामयोर्नलिके शराधारनलौ न भवतः, अपितु नलिके एव। तस्या भ्रूनासिकं दृष्ट्वा सर्वोऽपि कामाधीनो भवतीति भावः। 'नालीकः शरशल्ययोः' इति विश्वः। विश्वजयाय 'तुमर्थात्–' इति चतुर्थी। कामयोरिति 'शीलिकामिभक्ष्याचरिभ्यो णः' ॥

**सदृशी तव शूर सा परं जलदुर्गस्थमृणालजिद्भुजा।**
**अपि मित्रजुषां सरोरुहां गृहयालुः करलीलया श्रियः ॥२९॥**

सदृशीति ॥ हे शूर, सा भैमी परं केवलं तव सदृशी योग्या। किंभूता—जललक्षणं दुर्गं तत्र तिष्ठन्ति जलदुर्गस्थानि मृणालानि जयत इति जितौ भुजौ यस्याः सा। मृणालादपि कोमलौ गौरौ च (तद्भुजौ) इत्यर्थः। तथा—करलीलया हस्तविलासेन मित्रं सूर्यं, सुहृदं च जुषन्ते सेवन्ते मित्रजुंषि तेषाम्। विकसितत्वात्सश्रीकाणामपि सरोरुहां कमलानां श्रियो गृहयालुर्ग्रहीतुकामा। त्वमपि जलदुर्गस्थवैरिजिद्भुजः सत्सुहृदां सत्सहायानामपि वैरिणां संपदः करलीलया बलिक्रियया। गृहयालुरिति शूरत्वादुभयोः साम्यम्। अपिरन्यच्च इत्यर्थे वा। 'मित्रं सुहृदि मित्रोऽर्के', 'बलिहस्तांशवः कराः', 'लीला विलासक्रिययोः' इत्यमरः। गृहेश्चौरादिण्यन्तात् 'स्पृहिगृहि–' इत्यादिनालुचि 'अयामन्ता–' इत्ययादेशे गृहयालुः। तद्योगे 'न लोका–' इति षष्ठीनिषेधाच्छ्रिय इति द्वितीया ॥

**वयसी शिशुतातदुत्तरे सुदृशि स्वाभिविधिं विधित्सुनी।**
**विधिनापि न रोमरेखया कृतसीम्नी प्रविभज्य रज्यतः ॥३०॥**

वयसी इति ॥ हे राजन्, तस्यां सुदृशि सुनयनायां स्वाभिविधिं निजाभिव्याप्तिं विधित्सुनी कर्तुकामे अहमेव सर्वात्मना इमामभिव्याप्य तिष्ठामीति बाल्यं मन्यते। एवं तारुण्यमपि। एवंभूते शिशुता च तदुत्तरं शिशुताया बाल्यतः परं तारुण्यं च वयसी न रज्यतः, अपितु रज्यत एव संतुष्यत एव। बाल्यतारुण्ये तस्यां तिष्ठत इत्यर्थः। वयःसंधौ वर्तमाना इति यावत्। किंभूते वयसी—विधिना ब्रह्मणा उदरे वर्तमानया रोमरेखया प्रविभज्य समं विभागं कृत्वा कृतसीम्नी कृतमर्यादे अपि। एवंविधे विभज्य न रज्यतः, किं तर्हि संवलिते एवानुरागं भजत इति वा। बाल्यं वर्तते, रोमरेखोद्भवेन च तारुण्यं प्राप्तमित्युभे संवलिते एव तिष्ठतः। रम्यत्वाद्बाल्यं त्यक्तुं न शक्नोति, तारुण्यं चागन्तुमिच्छतीति भावः। विधिना शास्त्रोक्तमार्गेण रेखया कृतसीम्न्यपि सस्याधिकायां भुवि मदीयेयं मदीयेयमिति कौचिद्विवदेते ॥

---

१ 'अत्र भ्रुवोः कार्मुकत्वेन रूपणात् तथा नासिकाया नलिकात्वेन संभावनात् रूपकोत्प्रेक्षालंकारौ' इति **साहित्यविद्याधरी**। २ 'अत्र समश्लेषालंकारसंकरः' इति **साहित्यविद्याधरी**। ३ 'अत्रोक्तनिमित्ता विशेषोक्तिरलंकारः। तथा च **काव्यप्रकाशः**—'विशेषोक्तिरखण्डेषु कारणेषु फलावचः'। अत्र च रोमरेखया विधिनापि कृतसीमात्वकारणे सत्यपि प्रविभागस्थितिः कार्यं नोक्तम्। अत्र वस्त्वभिविधिविधानेच्छा निमित्तमुक्तम्' इति **साहित्यविद्याधरी**। 'अत्र प्रस्तुतवयोविशेषसाम्यादप्रस्तुतविवादप्रतीतेः समासोक्तिरलंकारः' इति **जीवातुः**।

अपि तद्वपुषि प्रसर्पतोर्गमिते कान्तिझरैरगाधताम् ।
स्मरयौवनयोः खलु द्वयोः प्लवकुम्भौ भवतः कुचावुभौ ॥३१॥

अपीति ॥ उभौ कुचौ स्तनौ तद्वपुषि प्रसर्पतोः प्लवमानयोः क्रीडतोर्द्वयोः स्मरयौवनयोः कामतारुण्ययोः प्लवकुम्भौ तरणकुम्भौ भवतः । खलु उत्प्रेक्षायाम् । किंभूते तद्वपुषि—कान्तिझरैः कान्तिप्रवाहैरगाधतामतलस्पर्शत्वं गमिते प्रापितेऽपि । अगाधे ह्युदके क्रीडानुचिता, तत्रापि क्रीडतोरिति द्योतनार्थमपिशब्दः । पूर्वापेक्षया अपिः, अन्यच्च इत्यर्थे वा । अगाधे ह्युदके क्रीडतोर्द्वयोर्घटद्वयेन भाव्यम् । यद्यपि द्विवचनेनैव द्वयोः, उभौ इति च लभ्यते तथापि सदासहवासित्वपरस्परमिलितत्वप्रदर्शनार्थमुक्तमित्यवगन्तव्यम् ॥

कलसे निजहेतुदण्डजः किमु चक्रभ्रमकारितागुणः ।
स तदुच्चकुचौ भवन्प्रभाझरचक्रभ्रममातनोति यत् ॥३२॥

कलस इति ॥ न्यायशास्त्रे समवायिकारणमसमवायिकारणं निमित्तकारणं चेति । यत्समवेतमेव कार्यमुत्पद्यते तत्समवायिकारणं, यथा मृत्पिण्डो घटस्य । तत्र पूर्वश्लोके कुम्भत्वारोपणेन तदुभयसाम्यमसहमानः कविः प्रभागुणाधिकत्वप्रतिपादनेन तयोरुत्कृष्टतामारोपयितुं हंसमुखेनापूर्वामुक्ति भङ्गिं प्रणीतवान् । असंभाव्यवस्तुदर्शने परसंमतिप्रश्ने किमुशब्दः । हे राजन्, चक्रभ्रमं करोत्येवंशीलश्चक्रभ्रमकारी तस्य भावश्चक्रभ्रमकारिता तल्लक्षणो गुणः स्वभावः (यः) कलसे घटे दृश्यते स निजस्य स्वस्य घटस्य हेतुर्निमित्तकारणं दण्डस्तस्माज्जातः किमु । समवायिकारणगुणः कार्ये गुणमारभते न निमित्तगुणः । अत्र तु निमित्तगुणः कार्ये गुणमारभत इति असंभाव्यमेतत्त्वया कुत्रचिद्दृष्टमिति प्रश्नार्थः किमु मया तु दृष्टः । कुत्रेत्यपेक्षायामाह—यद्यस्मात्स कलसस्तस्या भैम्या उच्चकुचौ भवन्नुच्चस्तनतां प्रपद्यमानः प्रभाझरेण दीप्तिसमूहेन चक्रभ्रमं कुलालचक्रभ्रमणम : करोति । सुन्दरवस्तुदर्शनेन दृष्टेर्भ्रमणं भवति । सूर्याद्यालोकावलोकनवत् । अथ च स तदुच्चकुचौ भवन्दीप्तिसमूहेन चक्रस्य राष्ट्रस्य, लोकसमूहस्य वा भ्रमं मदजनितं मोहमातनोति । सर्वोऽपि स्तनकान्तिदर्शनेन कामान्धो भवतीति भावः । अथ च कान्तिप्रवाहे चक्रवाकभ्रान्तिमातनोति । (कान्ति)प्रवाहे चक्रवाका भवन्ति (भ्रमन्ति)। अतो भ्रमकारणत्वाच्छब्दच्छलाच्चक्रभ्रमकारितागुणो घटे विद्यते । तुङ्गत्वेन कान्तिमत्त्वेन च तत्कुचौ घटचक्रवाकतुल्याविति भावः । निजः सहजश्चासौ हेतुश्च । समवायिकारणमिति यावत् । तादृशो न भवतीति अनिजहेतुर्निमित्तकारणं तादृशाद्दण्डाज्जाता । किमु इत्युत्प्रेक्षा, आक्षेपो वा । दण्डगुणः कलसे विद्यत इत्यत्र किं प्रमाणमित्याशङ्कायां शब्दच्छलेनाह—स इति । यद् यस्मादिति वा । इति

१ 'अत्र कुचयोः कुम्भत्वसंभावनेनोत्प्रेक्षालंकारो, न रूपकम् । तथा च **काव्यप्रकाशः**—'संभावनमथोत्प्रेक्षा प्रकृतस्य परेण यत्' । खलुशब्द उत्प्रेक्षाव्यञ्जकः, अतिशयोक्तिरिति वा' इति **साहित्यविद्याधरी** । 'अत्र कुचयोः स्मरयौवनप्लवनकुम्भत्वोत्प्रेक्षया तयोरौत्कट्यं कुचयोश्चातिवृद्धिर्व्यज्यत इत्यलंकारेण वस्तुध्वनिः' इति **जीवातुः** ।

यथामति व्याख्येयम्। 'चक्रो गणे चक्रवाके चक्रं सैन्यरथाङ्गयोः। ग्रामजाले कुलालस्य भाण्डे राष्ट्रास्त्रयोरपि' इति विश्वः॥

**भजते खलु षण्मुखं शिखी चिकुरैर्निर्मितबर्हगर्हणः।**
**अपि जम्भरिपुं दमस्वसुर्जितकुम्भः कुचशोभयेभराट्॥ ३३॥**

भजत इति॥ खलूत्प्रेक्षे। दमस्वसुः चिकुरैः केशैर्निर्मिता कृता बर्हगर्हणा पिच्छभारतिरस्कारो यस्य स शिखी मयूरः षण्मुखं कार्तिकेयं भजते सेवते। प्रसङ्गत एतदुक्तम्। तथा दमस्वसुः कुचशोभया स्तनभारेण जितौ गण्डौ यस्य स इभराट् करिणां राजा ऐरावतोऽपि जम्भारिमिन्द्रं सेवते। भैम्याः केशसाम्यं स्तनसाम्यं च देवाराधनेन प्राप्तुकामौ वैरनिर्यातनार्थं वा तौ भजत इति भावः। अधिकेन जितोऽन्यमधिकं भजते। चिकुरैरिति बहुवचनेनैव बहुत्वं सूचयित्वा षण्मुखपदप्रयोगेण षण्मुखत्वात्स्कन्दस्य केशसंभावनया तत्प्राप्त्यर्थं शिखिनः स्कन्दाश्रयणं युक्तम्। 'जभि जृभि गात्रविनामे' जम्भते गात्रविनामं करोतीति जम्भस्तद्रिपुर्जम्भादधिकः। अत एव सेव्यते। अस्या गात्रविनामकारिणी कुचशोभा जम्भतुल्येति हेतोस्तदधिकमिन्द्रं सेवते इति॥

**उदरं नतमध्यपृष्ठतास्फुटदङ्गुष्ठपदेन मुष्टिना।**
**चतुरङ्गुलमध्यनिर्गतत्रिवलिभ्राजि कृतं दमस्वसुः॥ ३४॥**

उदरमिति॥ हे राजन्, दमस्वसुर्भैम्या उदरं मुष्टिना कृतम्। विधिनेत्यर्थात्। किंभूतेन मुष्टिना—नतो नम्रो मध्यो यस्यैवंविधं पृष्ठं यस्योदरस्य तस्य भावस्तत्ता तया स्फुटत्प्रकटीभवदङ्गुष्ठपदमङ्गुष्ठस्थानं यस्य तेन। किंभूतमुदरम्—चतसृणामङ्गुलीनां मध्यात्तिस्रो वलयस्ताभिर्भ्राजते तच्छीलम्। पृष्ठमध्ये निम्नत्वमङ्गुष्ठनिवेशात्। उदरे त्रिवलियुक्तत्वं चतुरङ्गुलिधारणात्। चतसृणां त्रीण्येवान्तराणि भवन्ति। चतुरङ्गुलमिति 'तत्पुरुषस्या-' इत्यच्[3]॥

प्रकारान्तरेणोदरमेव वर्णयति—

**उदरं परिमाति मुष्टिना कुतुकी कोऽपि दमस्वसुः किमु।**
**धृततच्चतुरङ्गुलीव यद्वलिभिर्भाति सहेमकाञ्चिभिः॥ ३५॥**

---

१ 'अनुमानमलंकारः, स तदुच्चकुचौ भवन्निति रूपकम्। कुचकलसदर्शनाच्चक्रवाकभ्रान्तिततनाद्भ्रान्तिमानप्यलंकारो भवति' इति **साहित्यविद्याधरी**। 'अत्र समवायिकारणगुणा रूपादयः कार्ये संक्रामन्ति, न निमित्तगुणा इति तार्किकसमये स्थिते गुण इति चक्रभ्रम इति चोभयत्रापि वाच्यप्रतीयमानयोरभेदाध्यवसाय एव। स तदुच्चकुचौ भवन् इति कुचकलसभ्रमयोरभेदातिशयोक्त्युत्थापितझरचक्रभ्रमात्मकक्रियानिमित्ता कुचात्मनि कलसे कार्ये चक्रभ्रमकारितालक्षणनिमित्तकारणगुणसंक्रमलक्षणेनोत्प्रेक्षेति संक्षेपः। तार्किकसमये विरोधाद्विरोधाभासोऽलंकार इति कैश्चिदुक्तं, तदत्यन्ताश्रुतचरमलंकारपारदृश्वानः शृण्वन्तु' इति **जीवातुः**। २ 'अत्रोत्प्रेक्षा दीपकं चालंकारः' इति **साहित्यविद्याधरी**। 'अत्र शिख्यैरावतयोः षण्मुखजम्भारिभजनस्य जितबर्हत्वजितकुम्भत्वपदार्थहेतुकत्वात्तद्धेतुके काव्यलिङ्गे। तदसंबन्धेऽपि संबन्धाभिधानादतिशयोक्तिश्च' इति **जीवातुः**। ३ 'अत्र काव्यलिङ्गरूपकालंकारः' इति **साहित्यविद्याधरी**। 'उत्प्रेक्षा' इति **जीवातुः**।

उदरमिति ॥ कोपि कुतुकी दमस्वसुरुदरं मुष्टिना इयत्तया परिमाति व्यवच्छिनत्ति। किमु उत्प्रेक्षे । यद्यस्मात्तदुदरं सहेमकाञ्चिभिः सुवर्णमेखलासहिताभिर्वलिभिः कृत्वा धृतास्तस्य मुष्टेश्चतस्र अङ्गुलयो येन एवंविधमिव भाति । तिस्रो वलयश्चतुर्थी हेमकाञ्ची च। चतस्रोऽङ्गुलयस्तस्य मुष्टेरित्यर्थः। को ब्रह्मा। अपिरेवार्थः। ब्रह्मैवेत्यर्थः।

**पृथुवर्तुलतन्नितम्बकृन्मिहिरस्यन्दनशिल्पशिक्षया ।**
**विधिरेककचक्रचारिणं किमु निर्मित्सति मान्मथं रथम् ॥३६॥**

पृथ्विति ॥ विधिर्ब्रह्मा मान्मथं कामसंबन्धिनं रथं निर्मित्सति । किमु उत्प्रेक्षायाम् । किंभूतो विधिः—मिहिरः सूर्यस्तस्य स्यन्दनो रथस्तस्य शिल्पं निर्माणं तस्य शिक्षयाऽभ्यासेन पृथुं महान्तं वर्तुलं तस्या भैम्या नितम्बं करोतीति कृत्। किंभूतं रथम्—एककेनासहायेन चक्रेण चरति एवंशीलम्। सूर्यरथैकचक्रनिर्माणाभ्यासेन ब्रह्मणा भैमीनितम्बः कृतः स कामरथत्वेनोत्प्रेक्षितः। नितम्बदर्शनान्मदनप्रादुर्भावो भवतीति भावः। निर्मित्सति। माङः 'सनि मीमा–' इत्यादिना अच इस्, 'अत्र लोपोऽभ्यासस्य'[1] ॥

**तरुमूरुयुगेन सुन्दरी किमु रम्भां परिणाहिना परम् ।**
**तरुणीमपि जिष्णुरेव तां धनदापत्यतपःफलस्तनीम् ॥ ३७ ॥**

तरुमिति ॥ हे राजन्, सुन्दरी भैमी परिणाहिना विशालेनोरुयुगेनोरुद्वयेन तरुं वृक्षरूपां रम्भां कदलीं परं केवलं जिष्णुर्जयनशीलेति किमु वक्तव्यम्। अपि त्वेवं न वाच्यम्। किंतु तरुणीमपि तां रम्भामप्सरोविशेषमपि जिष्णुरेव। किंभूताम्—धनदापत्यस्य कुबेरपुत्रस्य नलकूबरस्य तपसः फलं स्तनौ यस्याः। यदर्थं नलकूबरेण तपः कृतं तां रम्भाम्। कदलीमप्यूरुयुगेन जितवतीत्यर्थः। द्वयेन द्वयं जितम्। 'परिणाहो विशालता' इत्यमरः। 'रम्भा कदल्यप्सरसोः' इति विश्वः। 'न लोका–' इति निषेधात्तरुमिति द्वितीया। सुन्दरी। गौरादित्वान्ङीष्[2] ॥

**जलजे रविसेवयेव ये पदमेतत्पदतामवापतुः ।**
**ध्रुवमेत्य रुतः सहंसकीकुरुतस्ते विधिपत्रदंपती ॥ ३८ ॥**

जलजे इति ॥ ये जलजे कमले रवेः सूर्यस्य सेवयेवैतस्या भैम्याः पदतां चरणत्वं पदमुत्तमस्थानं, व्याजं चावापतुः प्रापतुरिति ध्रुवमुत्प्रेक्षते । विधिपत्रदंपती ब्रह्मवाहनपक्षिजायापती हंसस्त्रीपुंसौ कर्तारौ ते जलजे कर्मणी एत्यागत्य रुतः शब्दात्सहंसकीकुरुतः हंससहिते कुरुतः। हंसरवतुल्याच्छिञ्जितादेते सहंसे इत्यनुमीयत इत्यर्थः। हंसकः पादकटकस्तत्सहिते नूपुरयुक्ते कुरुतः। विधिहंसमिथुनमेतन्नूपुरत्वेन परिणतमित्यर्थः। रविसेवया पद्मयोर्भैमीपदत्वप्राप्तिः। विधिसेवया हंसानामेतच्चरणस्थानप्रा-

---

१ 'अत्रोत्प्रेक्षोपमा चालंकारः' इति साहित्यविद्याधरी । 'अत्रोत्प्रेक्षयोर्हेतुहेतुमद्भूतयोरङ्गाङ्गिभावेन सजातीयः संकरः' इति जीवातुः। २ 'अत्रोत्प्रेक्षालंकारः' इति साहित्यविद्याधरी। ३ अत्रोत्प्रेक्षालंकारः, 'रम्भाशब्दः श्लिष्टः फलशब्देऽपि' इति साहित्यविद्याधरी।

प्तिरित्यर्थः। विधिपत्रदंपती ये पक्षे एत्य रुतः शब्दं कुरुतः। 'रु शब्दे'। तथा सहंसे कुरुत इति वा। कमलस्य हंससंयोगो युक्तः। भैमीपदयोः पश्चादप्युत्कृष्टत्वाद्धंसरवसमानशिञ्जितयोगाच्चेयमुत्प्रेक्षा। सुन्दरे सुकुमारे च सृजता ब्रह्मणा स्वीयहंसमिथुनमेव तद्भूषणत्वेन कल्पितम्, तादृशस्यान्यस्य भूषणस्याभावादिति ध्वनिः। 'हंसकः पादकटकः' इत्यमरः। पक्षे 'शेषाद्विभाषा' इति कप्, ततश्चिवः। रुत इति पक्षे संपदादिः[1]॥

**श्रितपुण्यसरःसरित्कथं न समाधिक्षपिताखिलक्षपम्।**
**जलजं गतिमेतु मञ्जुलां दमयन्तीपदनाम्नि जन्मनि॥ ३९॥**

श्रितेति॥ जलजं कमलं दमयन्ती(न्त्याः) पदमेव चरण एव नाम यस्यैवंभूते जन्मनि जन्मान्तरे मञ्जुलां रम्यां गतिं गमनं, पुण्यलोकप्राप्तिरूपां दशां च कथं न एतु प्राप्नोतु। किंभूतम्—श्रितानि पुण्यानि श्रेयस्कारीणि सरांसि, श्रेयस्कारिण्यो नद्यश्च येन तत्। तथा—समाधिना मुकुलीभावेन सम्यगाधिना क्षपिता अतिवाहिताः क्षपा रात्रयो येन। अन्योऽपि सेवितपुण्यतीर्थः समाधिना योगाङ्गेनातिवाहितसमस्तरात्रिर्जन्मान्तर उत्तमां दशां प्राप्नोति तद्वद्भैमीपदप्राप्तिर्जलजस्य[2]॥

एतादृशी सा कथं त्वया ज्ञातेत्यत आह—

**सरसीः परिशीलितुं मया गमिकर्मीकृतनैकनीवृता।**
**अतिथित्वमनायि सा दृशोः सदसत्संशयगोचरोदरी॥ ४०॥**

सरसीरिति॥ सरसीः सरांसि परिशीलितुमवगाहितुं गमेर्धातोः कर्मीकृता गतिविषयीकृता नैका अनेका नीवृतो देशा येन एवंविधेन मया सा भैमी दृशोरतिथित्वं दृग्गोचरत्वमनायि आनीता। दृष्टेत्यर्थः। किंभूता—सदसतोरस्ति नास्तीति संशयस्तस्य गोचरो विषय उदरं यस्याः सा। अत्यन्तं कृशोदरीति भावः। एतेन क्वापि देशे तादृशी न दृष्टेति भावः। 'नीवृज्जनपदो देशविषयौ' इत्यमरः। सरसीः। गौरादित्वान्ङीष्। शीलेर्भौवादिकात्तुमुन्। नीवृत् 'नहिवृति—' इति दीर्घः। गोचरोदरी 'नासिकोदर—' इति ङीष्[3]

**अवधृत्य दिवोऽपि यौवतैर्नसहाधीतवतीमिमामहम्।**
**कतमस्तु विधातुराशये पतिरस्या वसतीत्यचिन्तयम्॥ ४१॥**

अवेति॥ हे राजन्, अहमित्यचिन्तयं विचारितवानस्मि। किं कृत्वा—दिवोऽपि स्वर्लोकस्यापि यौवतैः स्त्रीसमूहैः सह नाधीतवतीं नाध्ययनकर्त्रीमिमां भैमीमवधृत्य निश्चित्य। सदृशैः सह पठ्यते किल। इतीति किम्—विधातुर्ब्रह्मण आशये मनस्यस्या भैम्याः कतमस्तु को वा पतिर्विद्यते इति। विधात्रा सुरसुन्दरीभ्योऽपि सुन्दर्या भैम्या योग्यः

१ अत्र हंसशब्दवाच्यात्तथा शिञ्जितसंभवाच्चैवंभूतोत्प्रेक्षा' इति साहित्यविद्याधरी। २ 'अत्र समासोक्तिरलंकारः' इति साहित्यविद्याधरी। ३ 'अत्रौजो गुणः। यदुक्तम् 'अर्थस्य प्रौढिरोजः'। सहृदयेन वक्रोक्तिजीवितकारेण चैष पर्यायवक्रताप्रकारः कथ्यते' इति साहित्यविद्याधरी।

को भर्ता विनिर्मित इति चिन्तितवानित्यर्थः । यौवतैरिति युवतिशब्दात्सामूहिके भिक्षादित्वादणि 'भस्याढे–' इति प्राप्तः पुंवद्भावो भिक्षादौ युवतिशब्दपाठसामर्थ्यान्न भवति। नसहाधीतवतीमिति 'सुप्सुपा' इति नेन समासः । कतम इति 'कतरकतमौ जातिपरिप्रश्ने' इति वचनसामर्थ्यात्स्वार्थेऽपि डतमच् ॥

**अनुरूपमिमं निरूपयन्नथ सर्वेष्वपि पूर्वपक्षताम् ।**
**युवसु व्यपनेतुमक्षमस्त्वयि सिद्धान्तधियं न्यवेशयम् ॥ ४२ ॥**

अन्विति ॥ इममस्या भैम्या अनुरूपं रूपयोग्यं पतिं निरूपयन् अयं वा योग्यः, अयं वा योग्य इति विचारयन्नपि अथ पश्चात्सर्वेष्वपि युवसु तरुणेषु पूर्वपक्षतामयोग्यरूपत्वं व्यपनेतुं निराकर्तुमक्षमोऽसमर्थः सन्नहं त्वयि सिद्धान्तधियं भैमीरूपानुरूपत्वबुद्धिं निःसपत्नं निश्चयं न्यवेशयं निवेशितवान्। अथ पश्चात्त्वयीति वा। त्वत्तोऽन्यस्तद्योग्यः कोऽपि तरुणो न विद्यत इति ॥ अन्यत्रापि पूर्वपक्षापेक्षया सिद्धान्तस्य बलवत्त्वम्[१] ॥

**अनया तव रूपसीमया कृतसंस्कारविबोधनस्य मे ।**
**चिरमप्यवलोकिताद्य सा स्मृतिमारूढवती शुचिस्मिता ॥४३॥**

अनयेति ॥ चिरं चिरकालमवलोकितापि शुचिस्मिता रम्यहास्या सा भैमी अद्य मे स्मृतिं स्मृतिपथमारूढवती प्राप्ता । किंभूतस्य मे—तवानया दृश्यमानया रूपसीमया लावण्यमर्यादया कृतं जनितं संस्कारविबोधनं पूर्वाहितभावनाख्यसंस्कारसमुद्बोधो यस्य। तद्रूपयोग्यत्वात्त्वद्रूपदर्शने सा स्मृतेत्यर्थः। सदृशदर्शने हि स्मृतिर्भवति। 'सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः' इति। रूपसीमयेति 'डाबुभाभ्याम्–' इति डापि तृतीया[४] ॥

**त्वयि वीर विराजते परं दमयन्तीकिलकिञ्चितं किल ।**
**तरुणीस्तन एव दीप्यते मणिहारावलिरामणीयकम् ॥ ४४ ॥**

त्वयीति ॥ किलेति संभावनायाम्। हे वीर हे शूर, किल दमयन्त्याः किलकिञ्चितं शृङ्गारचेष्टाविशेषः त्वयि परं केवलं विराजते विशेषेण शोभते। वीरस्यैव शृङ्गारित्वं युज्यते, वीरानुरागिणश्च स्त्रियः इति सूचनार्थं वीरेति पदम्। अर्थान्तरन्यासं दृष्टान्तत्वेनाह—मणिहारावलेर्मुक्ताहारसमूहस्य रामणीयकं सौन्दर्यं तरुणीस्तने तरुण्या एव

---

१ इदं च वृत्त्यनुसारेणोक्तम्। भाष्यमते तु 'भिक्षादिषु युवतिग्रहणानर्थक्यं पुंवद्भावस्य सिद्धत्वात्प्रत्ययविधौ' इति वार्तिकभाष्यरीत्या युवतिग्रहणस्य भिक्षादिगणे प्रत्याख्यानाङ्गीकारे यौवनेति रूपस्यापत्तेः। तस्माच्छत्रन्तङीबन्तयुवतिशब्दाद् 'अनुदात्तादेरञ्' इत्यञि 'भस्याढे तद्धिते' इति पुंवद्भावेन यौवतेति साधनीयम् । २ 'अत्र प्रतीपमलंकारः' इति **साहित्यविद्याधरी**। ३ 'अत्र सममलंकारः। तथा च **काव्यप्रकाशः**— 'समं योग्यतया योगो यदि संभावितः क्वचित्' इति **साहित्यविद्याधरी**। ४ अत्र स्मरणमलंकारः। तथा चोक्तं **काव्यप्रकाशे**–'यथानुभवमर्थस्य दृष्टे तत्सदृशे स्थितिः। स्मरणम्' इति **साहित्यविद्याधरी**।

कुचे शोभते, न तु वृद्धयोषितः। 'क्रोधाश्रुहर्षभीत्यादेः संकरः किलकिञ्चितम्' इत्यालंकारिकाः। रामणीयकं कामनीयकवत्॥

पुनरुत्कण्ठार्थमाह—

**तव रूपमिदं तया विना विफलं पुष्पमिवावकेशिनः।**
**इयमृद्धधना वृथावनी स्ववनी संप्रवदत्पिकापि का॥ ४५॥**

तवेति॥ हे राजन्, तव इदं दृश्यमानमनुपमं रूपं तया भैम्या विना विफलं निरर्थकम्। कस्य किमिव—अवकेशिनो वन्ध्यवृक्षस्य विफलं फलरहितं पुष्पमिव। तद्यथा न शोभते। अथवा—अवकेशिनो मुण्डितमुण्डस्य शिरसि धार्यमाणं पुष्पं यथा विफलम्। तया विना न केवलं रूपं विफलम्, किं च (तु)—ऋद्धधना पूर्णधना इयमवनी पृथ्व्यपि वृथा व्यर्थैव। तथा—संप्रवदन्तः कूजन्तः पिकाः कोकिला यस्यां सा स्ववन्यपि स्वयमारोपिता विलासवाटिकापि का, न कापि। भैमीप्राप्त्यभावे सर्वमेतन्निरर्थकमित्यर्थः। 'वन्ध्योफलोऽवकेशी च' इत्यमरः। वनी इति गौरादित्वान्ङीप्। अव्यक्तवाक्त्वात्संप्रवददित्यत्र वदेः शतॄ॥

अहमेवैतद्रूपयोग्यस्तर्ह्यसुलभा कथमित्यत आह—

**अनया सुरकाम्यमानया सह योगः सुलभस्तु न त्वया।**
**घनसंवृतयाम्बुदागमे कुमुदेनेव निशाकरत्विषा॥ ४६॥**

अनयेति॥ यतः सुरैर्देवैरपि काम्यमानयाभिलष्यमाणयानया भैम्या सह योगः संबन्धस्तु त्वया न सुलभः सुप्रापः। तत्र युक्तिमाह—केनेव अम्बुदागमे वर्षाकाले घनसंवृतया मेघच्छन्नया निशाकरस्य चन्द्रस्य त्विषा दीप्त्या सह संबन्धः कुमुदेनेव। सुप्रापो न। प्राप्स्यते, परंतु दुःखेन मदुपायेन सा प्राप्या। तत्र गत्वा त्वय्येव तस्या अनुरागमुत्पाद्य त्वामेव यथा भजेत्तथा करिष्यामीति भावः। यथा वर्षासु मेघानामतिप्रतिबन्धकतया कुमुदेन चन्द्रज्योत्स्ना दुष्प्रापापि वायुना दैवान्मेघनिराकरणे प्राप्यते तथेत्यर्थः। सुलभः खलर्थत्वेन षष्ठीनिषेधात्त्वयेति तृतीया॥

व्यञ्जितमर्थं व्यक्तीकुर्वन्निगमयति—

**तदहं विदधे तथातथा दमयन्त्याः सविधे तव स्तवम्।**
**हृदये निहितस्तया भवानपि नेन्द्रेण यथापनीयते॥ ४७॥**

तदिति॥ तत्तस्मात् योग्यस्य सान्तरायत्वात्कारणादहं दमयन्त्याः सविधे समीपे

---

१ 'अत्र प्रतिवस्तूपमालंकारः' इति **साहित्यविद्याधरी**। 'अत्र हारकिलकिञ्चितयोरुपमानोपमेययोर्वाक्यद्वये बिम्बप्रतिबिम्बतया स्तननृपयोः समानधर्मत्वोक्तेर्दृष्टान्तालंकारः' इति **जीवातुः**। २ 'अत्र छेकानुप्रासोऽलंकारः। अर्थालंकारास्तु विनोक्तिदीपकोपमालंकाराः' इति **साहित्यविद्याधरी**। ३ अत्र हि बिम्बप्रतिबिम्बभावेनोपमालंकारः' इति **साहित्यविद्याधरी**। 'अत्र तत्संयोगदौर्लभ्यस्यामरकामनापदार्थहेतुकत्वात्काव्यलिङ्गभेदः। तत्सापेक्षा चेयमुपमेति संकरः' इति **जीवातुः**।

तव स्तवं स्तुतिं तथातथा तेनतेन प्रकारेण विदधे करिष्यामि तथा भैम्या हृदये मनसि निहितोऽवधृतो भवान्यथा येन प्रकारेणेन्द्रेणापि नापनीयते दूरीक्रियते, किंपुनर्मनुष्येण । इन्द्रादेरप्यधिकतया त्वं वर्णनीयः । विदधे, अपनीयते इति च वर्तमानसामीप्ये वर्तमानवत्प्रत्ययः । विदधे आशंसायां भूतवद्वा ॥

अनौचित्यं परिहरति—

**तव संमतिमेव केवलामधिगन्तुं धिगिदं निवेदितम् ।**

**ब्रुवते हि फलेन साधवो न तु कण्ठेन निजोपयोगिताम् ४८**

तवेति ॥ इदं दमयन्तीयोजनं तवानुमतं नवेति केवलां संमतिमनुमतिमधिगन्तुमेव ज्ञातुमेव । प्राप्तुमित्यर्थः । इदं निवेदितं विज्ञप्तिं धिक् । हि यतः साधवो महान्तः निजोपयोगितां निजोपकारितां फलेन फलनिष्पत्त्या ब्रुवते, न तु कण्ठेन कण्ठस्थेन वचनेन । तव केवलां संमतिमेवाधिगन्तुं ज्ञातुमेवेदं निवेदितं मम वचनं तथापि निन्द्यम् । ममोपकारो न कर्तव्य इति केनापि नोच्यत इति वा । भवत्संमतिं ज्ञातुमेवेदं वचनं यदि संमतिं भवत्कर्तृकमात्मसंमानं प्राप्तुं चेद्वचनं तर्हि धिक् निन्द्यमेव । यतः—साधवो न ह्येतादृशा भवन्तीति वा[1] ॥

**तदिदं विशदं वचोमृतं परिपीयाभ्युदितं द्विजाधिपात् ।**

**अतितृप्ततया विनिर्ममे स तदुद्गारमिव स्मितं सितम् ॥ ४९ ॥**

तदिति ॥ स नलः द्विजाधिपात्पक्षिश्रेष्ठात्, चन्द्राच्चाभ्युदितं निर्गतमिदं पूर्वोक्तं विशदं प्रव्यक्तं धवलं च वचोलक्षणममृतं परिपीय सादरमाकर्ण्य पीत्वा चातितृप्ततयातिहृष्टत्वेन सितं श्वेतं स्मितं तस्य पीतस्यामृतस्य चोद्गारमिव विनिर्ममे चकार । श्वेतस्य श्वेत एवोद्गारो भवतीति सितपदम् । अन्योऽप्यतितृप्तोऽजीर्णभयादुद्गारं करोति, सोऽप्यपक्वत्वात्सितो भवति । साधवः स्मितभाषिणः । भैमीप्राप्तिसंभावनाज्जातहर्षाद्वा स्मितम् । उद्गार इति 'उदयोर्ग्रः' इति घञ्[3] ॥

**परिमृज्य भुजाग्रजन्मना पतगं कोकनदेन नैषधः ।**

**मृदु तस्य मुदेऽकिरद्गिरः प्रियवादामृतकूपकण्ठजाः ॥ ५० ॥**

परीति ॥ नैषधो नलः तस्य हंसस्य मुदे हर्षाय गिरो वाचः मृदु कोमलं यथा तथाकिरदुवाच । किं कृत्वा—भुजाग्रे बाहुप्रान्ते जन्मोत्पत्तिर्यस्य तेन कोकनदेन रक्तोत्पलेन । करेणेत्यर्थः । पतगं परिमृज्य संस्पृश्य । किंभूता गिरः—प्रियवादामृतं स्तुतिव-

---

१ 'अत्रातिशयोक्तिरलंकारः' इति साहित्यविद्याधरी । २ 'अत्रार्थान्तरन्यासोऽलंकारः' इति साहित्यविद्याधरी । ३ 'अत्र रूपकोत्प्रेक्षालंकारः । तत्र वचोमृतमिति रूपकम् । तदुत्प्रेक्षाया निमित्तम् । अत्रार्थान्तरप्रतीतिस्तु रूपकादेव । तेन नात्र समासोक्तिः' इति साहित्यविद्याधरी ।

चोलक्षणममृतं तस्य कूपः। आकर इत्यर्थः। एवंभूतो यः कण्ठस्तस्माज्जाताः। मञ्जुलं सरसं च वच उवाचेति भावः। मृदु परिमृज्येति वा ॥

**न तुलाविषये तवाकृतिर्न वचोवर्त्मनि ते सुशीलता।**
**त्वदुदाहरणाकृतौ गुणा इति सामुद्रकसारमुद्रणा ॥ ५१ ॥**

नेति ॥ हे हंस, तव आकृतिः स्वरूपं तुल्यत इति तुला उपमेयं तल्लक्षणे विषये न। उपमानाभावात्, किं तूपमानमेव। तुल्यतेनऽयेति तुला उपमानं तस्य विषये लक्ष्ये उपमेयमध्ये न तिष्ठति, किं तूपमानमेवेति वा। तथा—ते सुशीलता सुस्वभावत्वं सुवृत्तत्वं वा वचोवर्त्मनि न वाग्गोचरो न। वर्णयितुं न शक्यत इत्यर्थः। तथा—आकृतौ गुणा इति 'यत्राकृतिस्तत्र गुणा वसन्ति' इति सामुद्रकशास्त्रस्य सारो रहस्यं तस्य मुद्रणा नियमना। संग्रह इति यावत्। सा त्वदुदाहरणा त्वमेवोदाहरणं दृष्टान्तो यस्याः। अन्यथा सा निर्विषया स्यादिति भावः। तवाकृतिं गुणांश्च दृष्ट्वा सामुद्रिकशास्त्रकारैः 'यत्राकृतिस्तत्र गुणा वसन्ति' इत्युक्तम्। उदाहरणं प्रथमदृष्टान्तस्त्वमित्यर्थः' इति वा। तुलेति कर्मणि करणे च 'घञर्थे कविधानम्' इति कः। ण्यन्तत्वात्तुलनेति यद्यपि भवितव्यम्। तथापि 'अतुलोपमाभ्याम्' इति निर्देशात्कप्रत्ययः। सामुद्रकेति समुद्रेण प्रोक्तमित्यस्मिन्नर्थे 'तेन प्रोक्तम्' इत्यणि स्वार्थे कन्। 'सामुद्रिक' इति पाठेऽणन्तादस्त्यर्थे 'अत इनि ठनौ' इति ठन्[२] ॥

**न सुवर्णमयी तनुः परं ननु किं वागपि तावकी तथा।**
**न परं पथि पक्षपातितानवलम्बे किमु मादृशेऽपि सा ॥ ५२ ॥**

नेति ॥ ननु संबोधने। तावकी तवेयं तनुः परं केवलं सुवर्णमयी हेमविकारो न, किंतु तावकी वागपि वाण्यपि तथा किं सुवर्णमयी शोभना वर्णा यस्यां सा। किं प्रश्ने। वाक्पटुत्वं, शरीरसौन्दर्यं च त्वय्येवेति सूचितम्। नु संबोधने न इति पृथक्। वागपि तथा न किम्, अपितु तथैवेति वा। अन्यच्च तव पक्षपातिता पक्षाभ्यां पतति गच्छत्येवंशीलः पक्षपाती तस्य भावस्तत्तानवलम्बे निरालम्बे पथि अन्तरिक्षमार्गे परं केवलं न, किं तु सा पक्षपातिता स्ववर्गान्तःपातित्वमनुकूलवर्तित्वमनवलम्बे निर्गतिके मादृशे मत्सदृशे किमु किं नेति वा। निरालम्बनस्य मम त्वमेवालम्बनमिति भावः ॥

**भृशतापभृता मया भवान्मरुदासादि तुषारसारवान्।**
**धनिनामितरः सतां पुनर्गुणवत्संनिधिरेव सन्निधिः ॥ ५३ ॥**

---

१ 'अत्र 'भुजाग्रजन्मना कोकनदेनेति विषयस्यानिगरणेन विषयिणः कोकनदस्यैवोपनिबन्धनादतिशयोक्तिः। 'विषयस्यानुपादानाद्विषय्युपनिबध्यते। यत्र सातिशयोक्तिः स्यात्कविप्रौढोक्तिसंमता ॥' इति लक्षणात्। सा च पाणिकोकनदयोरभेदोक्तिरभेदरूपा, तस्याः प्रियवादामृतकूपकण्ठेति रूपकसंसृष्टिः' इति **जीवातुः**। २ ण्यन्तादिति पाठ आसीत्। ३ 'अत्रोत्तरवाक्यार्थस्य पूर्ववाक्यार्थहेतुकत्वात् काव्यलिङ्गमलंकारः' इति **जीवातुः**। 'अत्रातिशयोक्तिरलंकारः काव्यलिङ्गं च' इति **साहित्यविद्याधरी**। ४ 'अत्र श्लेषोत्प्रेक्षालंकारः' इति **साहित्यविद्याधरी**। 'अत्र तनुवाचोः प्रकृताप्रकृतयोः सुवर्णमयीति शब्दश्लेषः। एवं पथि मादृशेऽपि पक्षपातितेति इति सजातीयसंसृष्टिः। तया चोपमा व्यज्यते' इति **जीवातुः**।

भृशेति ॥ हे हंस, मया भवान्मरुद्वायुरासादि प्राप्तः। किंभूतेन—भृशतापमतिशयितकामज्वरं बिभर्तीति। किंभूतो मरुत्—तुषारस्य हिमस्य सारः श्रेष्ठो भागो विद्यतेऽस्मिन्। ज्वरतप्तस्य शीतलेन वायुना यथा तापनाशस्तथा भवत्संगत्या ममेत्यर्थः। तदेव दृष्टान्तेनाह—धनिनां धनवतामितर एतद्विलक्षणो नीचो द्रव्यरूपो वा संनिधिः सम्यङ्निधिः। सतां विदुषां पुनर्गुणवतां संनिधिः समागम एव संनिधिः सम्यग् निधिर्न त्वन्यः। निधिप्राप्त्या धनिकानां यथा हर्षस्तथा गुणिजनसंनिधिवासिनां हर्षः। सन्निति पृथग्वा। 'इतरस्त्वन्यनीचयोः' इत्यमरः ॥

**शतशः श्रुतिमागतैव सा त्रिजगन्मोहमहौषधिर्मम।**
**अमुना तव शंसितेन तु स्वदृशैवाधिगतामवैमि ताम् ॥ ५४॥**

शतश इति ॥ त्रिजगतो मोहे मूर्च्छाप्रापणे वशीकरणे च महौषधिरुत्तमौषधिः। संमोहिनी विद्येत्यर्थः। सा भैमी शतशः शताद्बहुभ्योऽनेकवारं वा मम श्रुतिमागतैव। अनेकवारमाकर्णितैवेत्यर्थः। अमुनानेन तव शंसितेन त्वत्कर्तृकेण सौन्दर्यकथनेन तु पुनरहं तां भैमीं स्वदृशैव स्वनेत्रेणैवाधिगतां दृष्टामवैमि जाने। यद्येवंविधा त्वया दृष्टा तर्हि मयापि दृष्टैवेत्यतिमित्रतया लौकिक्युक्तिः। यच्च बहुवारमाकर्ण्यते तत्कदाचिद्दृश्यतेऽपि। शतश इति बह्वर्थकारकत्वाच्छस् ॥

नेत्रादपि मित्रवचनस्याधिक्यमाह—

**अखिलं विदुषामनाविलं सुहृदा च स्वहृदा च पश्यताम्।**
**सविधेऽपि नसूक्ष्मसाक्षिणी वदनालंकृतिमात्रमक्षिणी ॥५५॥**

अखिलमिति ॥ चौ तुल्ययोगार्थौ। सुहृदा मित्रेण च स्वहृदा स्वमनसा चाखिलं समस्तं वस्त्वनाविलमसंदिग्धम्, अविपर्यस्तं च आगमानुमानाभ्यां पश्यताम्, अनाविलमसंदिग्धं यथा भवति तथा वा जानतां विदुषां ज्ञातॄणामक्षिणी नेत्रे वदनालंकृतिमात्रं मुखालंकरणमेव न त्वन्यत्तयोः प्रयोजनम्। यतः किंभूते अक्षिणी—सविधे समीपेऽपि न सूक्ष्मवस्तुग्राहके। यन्नेत्रद्वयं स्वगतं कज्जलारक्तत्वादिकमपि ज्ञातुं न शक्नोति तद्दूरस्थं कथं गृह्णीयात्। असामीप्यादिति भावः। अतः प्रत्यक्षं ताभ्यां दुर्बलमित्यर्थः। मित्रस्य प्रथमग्रहणं हृदयापेक्षया प्राधान्यद्योतनार्थम्। एवंविधे अक्षिणी अलंकरणमात्रं न, किंत्वलंकृतिरेव वद कथय इति वा। सुहृदा देशकालादिव्यवहितमपि पश्यति न तु नेत्राभ्याम्। सुहृदेति 'सुहृद्दुर्हृदौ—' इति साधुः। नसूक्ष्मेति नसमासः। सूक्ष्मसाक्षिणी नेति केचित्। 'मात्रं कार्त्स्न्येऽवधारणे'। अत्रावधारणे मात्रशब्दः ॥

---

१ 'अत्र रूपकार्थान्तरन्यासालंकारौ। अर्थान्तरप्रतीतिस्तु रूपकेनैव। तेन समासोक्तिबुद्धिर्न कार्या' इति साहित्यविद्याधरी। 'दृष्टान्तालंकारः' इति जीवातुः। २ 'अत्र रूपकभाविकालंकारौ। तथा चोक्तं काव्यप्रकाशे—'प्रत्यक्षा इव यद्भावाः क्रियन्ते भूतभाविनः। तद्भाविकम्' इति, इति साहित्यविद्याधरी। ३ 'अत्रातिशयोक्तिरलंकारः' इति साहित्यविद्याधरी।

**अमितं मधु तत्कथा मम श्रवणप्राघुणकीकृता जनैः ।**
**मदनानलबोधने भवेत्खग धाय्या धिगधैर्यधारिणः ॥ ५६ ॥**

अमितमिति ॥ हे खग, हंस, जनैर्लोकैः श्रवणयोः प्राघुणकीकृतातिथीकृता श्राविता तस्या भैम्याः कथा मम मदनानलस्य कामाग्नेर्बोधने दीपने धाय्या अग्निसंधुक्षणे समर्था ऋग्भवेद्भवति । तया यथाग्निर्दीप्यते तथा तत्कथया मम मदनाग्निर्दीप्यते। किंभूता तत्कथा—अमितमनुपमं, बहु वा मधु । दिव्यापरिमितामृततुल्येत्यर्थः । अतोऽधैर्यधारिणो मत्सदृशानधीरान्पुरुषान्धिक् । एतादृशा अधीरा निन्द्याः । मम (इत्यस्य) विशेषणम्, अधैर्यधारिण इति वा । तदा मां धिगित्यर्थः । ऋक्सामिधेनी धाय्या च या स्यादग्निसमिन्धनी' इत्यमरः ॥

**विषमो मलयाहिमण्डलीविषफूत्कारमयो मयोहितः ।**
**खग कालकलत्रदिग्भवः पवनस्तद्विरहानलैधसा ॥ ५७ ॥**

विषम इति ॥ हे खग, तद्विरहानलः भैमीवियोगवह्निस्तस्यैधसा इन्धनेन मया कालः कलत्रं दिक् दक्षिणा तत्र भवः पवनो वायुर्दक्षिणवातः विषमो दुःसहः ऊहितस्तर्कितः। किंभूतः—मलयाचले वर्तमाना अहिमण्डली भुजंगसमूहस्तस्य विषं तस्य फूत्कारमयोऽग्निसंधुक्षणधमनवायुरूपः । विषं माति आत्मना समीकरोतीति वा । विषं मयते ददाति वा । कालयति सर्वभूतानीति कालस्तत्पुत्रस्त्वेवंविध एव संभाव्यते । फूत्कारसंधुक्षितेन वह्निना यथा काष्ठं दह्यते तथा मलयपवनसंधुक्षितेन विरहानलेनाहमपि दह्ये इति भावः । मलयाचले चन्दनबाहुल्यात्सर्पबाहुल्यम् । विषम इति 'आतोऽनुपसर्गे कः' । फूत्कारमय इति ताद्रूप्ये प्राचुर्ये वा मयट् । कालेति नोदनार्थात्कालयतेश्चौरादिकात्पचाद्यच् ॥

**प्रतिमासमसौ निशापतिः खग संगच्छति यद्दिनाधिपम् ।**
**किमु तीव्रतरैस्ततः करैर्मम दाहाय स धैर्यतस्करैः ॥ ५८ ॥**

प्रतिमेति ॥ हे खग, असौ निशापतिश्चन्द्रः प्रतिमासं मासेमासे यद्दिनाधिपं सूर्यं संगच्छति प्रविशति स चन्द्रः ततः सूर्यसङ्गात्तीव्रतरैरतितीक्ष्णैर्धैर्यतस्करैर्धैर्यचोरैः करैः किरणैः मम दाहाय किमु । जात इति शेषः । उपलक्षित इति वा । विधोर्विरहिणां संतापकारित्वं स्वत एव रवेस्तैक्ष्ण्यमादायोत्प्रेक्षितम् । अन्योऽपि स्वतोऽपकारेऽसमर्थो-

---

१ 'अत्रातिशयोक्तिरूपकार्थान्तरन्यासालंकाराणां संकरः' इति **साहित्यविद्याधरी** । 'अत्र तत्कथाया धाय्यात्मना प्रकृतमदनाग्नीन्धनोपयोगात् परिणामालंकारः । 'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः' इत्यलंकारसर्वस्वकारः' इति **जीवातुः** । २ 'बत काल—'इति पाठे बत खेदे इति **तिलकजीवातू** । ३ 'अत्र काव्यलिङ्गरूपकालंकारः । अत्र पदार्थे वाक्यार्थप्रतिपादनादोजो गुणः ।' इति **साहित्यविद्याधरी** । 'विरहानलैधसेति रूपकोत्थापितेयं दक्षिणपवनस्य मलयाहिमण्डलीफूत्कारत्वोत्प्रेक्षेति संकरः' इति **जीवातुः** ।

मयि स्वत्वं नाभविष्यत्तर्हि इन्द्रं परित्यज्य मां नावरिष्यः। वृतवत्यसि तावत्, तस्मादेवमपि मया याचितुमयुक्तमेवेति तव किंकरोस्मीति भावः। दिवस्पतिं, दयापणेनेत्येताभ्यामिन्द्रापेक्षया त्वदपेक्षया चाहमतितरां गुणवानिति वृत इति न, किंतु मद्वरणे तव कृपैव हेतुः, सा यावज्जीवं कार्येत्यर्थः॥

**शृण्वता निभृतमालिभिर्भवद्वाग्विलासमसकृन्मया किल।**
**मोघराघवविवर्ज्यजानकीश्राविणी भयचलासि वीक्षिता॥१४७॥**

शृण्वतेति॥ किल कदाचित्समये आलिभिः सह असकृद्भवत्या वाग्विलासं कथासंवादं निभृतं पश्चादागत्याज्ञातं यथातथा वरदानाददृश्यत्वेन वा गुप्तं यथातथा शृण्वता, निभृतं रहसि स्थितत्वान्मच्छ्रावणशङ्काभावात्स्पष्टं स्वच्छन्दं सखीभिः सह भवत्संवादं किल शनैः पश्चादागमनाददृष्टीकरणादिना कपटेन शृण्वता सता वा, मया त्वं वीक्षिता एवंभूता दृष्टाऽसि। किंभूता—मोघं वह्नौ परीक्ष्याप्यकारणं श्रीराघवेण विवर्ज्यां त्यक्तां स्वस्मिन्नेवानुरक्तामपि जानकीं शृणोतीति तच्छीला सीतेव भयेन स्वत्यागशङ्काभीत्या चला व्याकुला। (तस्मात्किंकरभूते मय्यन्यथा धीर्न कार्येति भावः।) यद्वा—यस्माद्भीता दृष्टासि, तस्मादवश्यं मयि तवानुरागोस्तीति निश्चित्य धीयतां मयि-'इति वक्तुमयुक्तमिति भावः।[1] राघवः गोत्रापत्ये बिदादेराकृतिगणत्वादञ्। बहुत्वे तु 'यञञोश्च' इत्यञो लुक्। तेन 'रघूणामन्वयं वक्ष्ये' इति साधुः॥

**छुप्तपत्रविनिमीलितात्क्षुपात्कच्छपस्य धृतचापलात्पलात्।**
**त्वत्सखीषु सरटाच्छिरोधुतः स्वं भियोऽभिदधतीषु वैभवम्॥१४८॥**
**त्वं मदीयविरहान्मया निजां भीतिमीरितवती रहः श्रुता।**
**नोज्झितासि भवतीं तदित्ययं व्याहरद्वरमसत्यकातरः॥१४९॥**

छुप्तेति॥ त्वमिति॥ युग्मम्। अयं नलस्तां प्रतीति वरमभीष्टं व्याहरदुवाच। अभयदानं प्रादात्। इति किम्—हे भैमि, कदाचित्सखीसमूहेन सह गोष्ठ्यां प्रसृतायां प्रसङ्गात्का कस्माद्बिभेति, का कस्मादिति तथ्यं कथ्यतामित्यन्योन्यं भयहेतुप्रश्ने कृते छुप्तानि स्पृष्टानि पत्राणि यस्यैवंभूतोऽङ्गुल्यादिना स्पृष्टमात्रः सन्विशेषेण निमीलितः संकुचितः, तस्मात्क्षुपाल्लज्जालुसंज्ञकादोषधिविशेषात्सकाशादहं सुतरां बिभेमीति कयाचिदुक्तम्, धृतं चापलं (ये)न स्वभावत एव चलतः कच्छपस्य पलान्मांसादहमित्यन्यया कथितम्, अनिशं शिरोधुतो मूर्धानं कम्पयतः प्रतिक्षणमन्यवर्णात्सरटात्कृकलासात्सकाशादहमित्यपरया, इत्येवं त्वत्सखीषु स्वं निजं भियो भयस्य वैभवं हेतुमभिदधतीषु भाषमाणासु सतीषु कयाचिदस्माभिर्निजभयहेतुरुक्तस्त्वयापि कथ्यतामिति त्वां प्रत्युक्ते सति नलवियोगाद्धेतोरहं बिभेमि क्षणमात्रमपि तेन न भाव्यमिति तस्मादेव बिभेमि नत्वन्यस्मादिति मदीयविरहान्निजां भीतिं रहसि ईरितवती त्वं मया श्रु-

[1] अयं पाठः पूर्वश्लोकव्याख्यान्तर्गतः प्रतिभाति।

तासि यस्मात्, तस्मान्मा भैषीरहं भवतीं कदाचिदपि नोज्झितास्मीति। यतः—असत्ये नारीप्रलोभनवचनविषये कातरो भीरुः। भाविनस्त्यागस्य दैवाधीनत्वान्नासत्यवादित्वमिति भावः। यद्वा—असतीष्वकातरः, सतीषु विषये भीरुरेव। तद्भयनिराकरणार्थमेवमवददित्यर्थः। छुतेति 'छुप स्पर्शे' इति तौदादिकादनिटो निष्ठा। शिरोछुत इति क्विबन्तम्॥

**संगमय्य विरहेऽस्मि जीविका यैव वामथ रताय तत्क्षणम्।**
**हन्त दत्थ इति रुष्टयावयोर्निद्रयाऽद्य किमु नोपसद्यते॥ १५०॥**

संगेति॥ हे भैमि, इत्यतो हेतो रुष्टया कुपितयेव निद्रयाऽद्यास्यां रात्रावावयोर्नोपसद्यते आसन्नया न भूयते किम्विति वितर्के। इति किम्—हे भैमीनलौ, यैवाहं निद्रा विरहे विवाहात्पूर्वं वियोगसमये वां युवां स्वप्नदर्शनादिवशात्संगमय्य संयोगं प्रापय्य युवयोर्जीविकास्मि प्राणधारणहेतुरभूवमित्यर्थः। तत्क्षणं तस्या मम संबन्धिनं क्षणं रात्रिलक्षणं समयमवसरं वा अथ विवाहानन्तरं स्वकार्यार्थं रताय युवां दत्थः। रात्रिलक्षणे मदीयसमय एव सुरतस्य क्रियमाणत्वात्। हन्त कष्टमनुचितम्। कृतमुपकारं न स्मरथ इत्यर्थः। आपदि कृतोपकारा हि तदीयेऽवसरेऽन्यस्मै दत्ते सति कोपात्स्वामिसमीपं नागच्छन्तीत्यापदि कृतोपकाराया मम रात्रिरूपोऽवसरः सुरताय दत्तो युवाभ्याम्, मह्यं तु मदीयावसरस्य लेशोपि न दत्तः, प्रभातपर्यन्तं सुरतस्यैव करणादिति कोपवशादिवावयोर्निद्रा नायातीति नलस्तामवोचदित्यर्थः। आप्रभातं ताभ्यां कामकेलयः कृता इति भावः। न क्षणमिति पाठे—यैव जीविका तस्या मम रताय प्रीतये क्षणमल्पमपि समयं न दत्थ इति रुष्टयेति व्याख्येयम्। संगमय्य 'ल्यपि लघुपूर्वात्' इति णेरयादेशः। जीविका कर्तरि ण्वुल्। वां षष्ठीद्वितीयाद्विवचने वामादेशः॥

**ईदृशं निगदति प्रिये दृशं संमदात्कियदियं न्यमीलयत्।**
**प्रातरालपति कोकिले कलं जागरादिव निशः कुमुद्वती॥१५१॥**

ईदृशमिति॥ इयं प्रिये ईदृशमेवंप्रकारमन्यदपि निगदति सत्येव संमदाद्धर्षात्। सुरतानन्दजश्रमादिति यावत्। तस्माद्धेतोर्दृशं नेत्रे कियत्किंचिन्न्यमीलयन्निमीलितवती। श्रमसंजातया निद्रया प्रयोजिकयेति शेषः। निदद्रावित्यर्थः। श्रान्तो हि निद्राति। संमदादेवं गदति सतीति वा। दृशं न्यमीलयत्। संमदादिव प्रियप्रियोक्तिश्रवणसंजातहर्षवशादिवेत्यर्थः। आनन्दातिशयसुखमनुभवन् हि निमीलितदृग्भवतीति प्रतीयमानोत्प्रेक्षा वा। कियदित्यनेन दृशोर्धनिमीलनस्य सूचितत्वाद्धन्यतमत्वमस्याः सूचितम्। केव—प्रातः कोकिले कलं मधुरास्फुटध्वनिं श्रोत्रसुखमालपति सति कुमुदिनीव। कुमुदिनी यथा निमीलितोत्पला भवति तथेयमपि। कस्मादिव—निशो रात्रिसंबन्धिनो जागरादिव। रात्रावनिद्रो हि प्रातर्दृशं घूर्णनेन निमीलयति। कुमुदिन्यपि रात्रावनिद्रावशादिव प्रातर्निमीलयति, तस्मादियमपि। प्रतीयमानोत्प्रेक्षा। न्यमीमिलदिति पाठे—णौ चङि 'भ्राजभास—' इति पाक्षिक उपधाह्रस्वः। जागराद्भावे घञि 'जाग्रोऽविचिण्णल्ङित्सु' इति वृद्ध्यपवादो गुणः॥

**मिश्रितोरु मिलिताधरं मिथः स्वप्नवीक्षितपरस्परक्रियम्।**

**तौ ततोऽनु परिरम्भसंपुटैः पीडनां विदधतौ निदद्रतुः॥ १५२॥**

मिश्रितेति॥ ततोऽनु तादृक्प्रियभाषणमध्य एव भैमीसंभोगरसानन्तरं परिरम्भरूपे संपुटे। संश्लेषपेटिकायामिति यावत्। तत्र पुनरपि पीडनां गाढालिङ्गनां विदधतौ कुर्वाणौ तौ मिश्रिते परस्परान्तरालघटिते ऊरू यस्यां क्रियायां तद्यथातथा, मिथः पानवशादन्योन्यमिलितावधरौ यस्यां क्रियायां तद्यथातथा, स्वप्ने वीक्षिता परस्परक्रियाऽन्योन्यचुम्बनादिव्यापारो यस्यां क्रियायां तद्यथातथा निदद्रतुः। क्षीरनीरालिङ्गनं कृत्वा निद्रितावित्यर्थः। पीडनां ण्यन्तत्वाद्युच्॥

**तद्यातायातरंहश्छलकलितरतश्रान्तिनिश्वासधारा-**

**जस्रव्यामिश्रभावस्फुटकथितमिथःप्राणभेदव्युदासम्।**

**बालावक्षोजपत्राङ्कुरकरिमकरीमुद्रितोर्वीन्द्रवक्ष-**

**श्चिह्नाख्यातैकभावोभयहृदयमयाद्द्वन्द्वमानन्दनिद्राम्॥१५३॥**

तदिति॥ तद्द्वन्द्वं स्त्रीपुंसमिथुनमानन्देन संभोगसुखभरेण निद्रामयात्प्राप। किंभूतम्—निद्रासंबन्धिश्वासानां यातायातयोर्निर्गमप्रवेशयोः संबन्धिनो रंहसो वेगस्य छलेन व्याजेन कलिताऽङ्गीकृता या रतश्रान्तिनिश्वासधाराः सुरतश्रमसंजातनिश्वासपरम्परास्तासामन्योन्यमजस्रमनवरतं सुतरां यो व्यामिश्रभावः निद्रावशभैमीनासानिर्गतश्वासपरम्परासु निद्रावशनलनासानिर्गतनिश्वासपरम्पराः प्रविष्टाः एवं वैपरीत्येनापि ज्ञातव्यम्। भैमीनिश्वासधारा निर्गत्य नलनिश्वासधारया सह मिलित्वा नलनासिकां प्रविशति, अत्रापि वैपरीत्यं ज्ञातव्यम्। इति मिश्रीभावार्थमिव यातायाते। तथा च—जले जलप्रवेशवदन्योन्यस्य निश्वासपरम्पराणामतितरामभेदोपलम्भ इति यावत्। तेन कर्तृभूतेन स्फुटं स्पष्टं कथितः मिथोऽन्योन्यस्य प्राणानां भेदव्युदासो भेदनाशः प्राणैक्यं यस्य। तथा—बालाया वक्षोजौ स्तनौ तत्र पत्राङ्कुराः पत्रवल्लीभूताः, तत्पत्रवल्लीषु वर्तमानाः करिमकर्यः कस्तूर्यादिरचिता हस्तिमकर्यस्ताभिर्मुद्रितं चिह्नितं निद्रासमयकृतगाढालिङ्गनवशात्संलग्नप्रतिरूपकं कृतमुर्वीन्द्रवक्षस्तद्रूपं चिह्नं तेनाख्यातोऽतितरां स्पष्टं कथित एकभाव एकत्वमभेदो यस्यैवंभूतमुभयोर्भैमीनलयोर्हृदयं वक्षस्थलम्, अथ च—चित्तं यत्र। यातेत्यादि, बालेत्यादि च द्वयं क्रियाविशेषणत्वेन वा योज्यम्। आत्मैक्यं शरीरैक्यं च क्रमेण वर्णितमिति ज्ञेयम्। उभयोरपि मिश्रितश्वासत्वादेकप्राणशब्दश्लेषाद्रुत्प्रेक्षितम्॥

**श्रीहर्षं कविराजराजिमुकुटालंकारहीरः सुतं**

**श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।**

**यातोऽस्मिञ्शिवशक्तिसिद्धिभगिनीसौभ्रात्रभव्ये महा-**
**काव्ये तस्य कृतौ नलीयचरिते सर्गोऽयमष्टादशः ॥ १८ ॥**

श्रीहर्षमिति ॥ शिवस्य शक्तेश्च सिद्धिर्यत्र (शिवशक्तिसाधनं यत्र कृतं) स शिवशक्ति-साधननामा ग्रन्थः । शिवभक्तीतिपाठे—शिवस्य भक्तेः सिद्धिर्यत्र शिवभक्तिप्रतिपादको ग्रन्थविशेषः । तस्य (सैव) भगिनी एककर्तृकत्वात्, तस्यां सौभ्रात्रेण शोभनभ्रातृभावेन भव्ये प्रशस्ते तत्तुल्यसरसशब्दार्थन्यासे नलीयचरितेऽष्टादशानां पूरणः सर्गः समाप्तः । शिवशक्तिसिद्धिरपि मया कृतेति सूचितम् । सौभ्रात्रमिति भावे युवादित्वादण् । अष्टादशः 'तस्य पूरणे डट्' ॥

इति श्रीवेदरकरोपनामकश्रीनरसिंहपण्डितात्मजनारायणविरचिते नैषधीयप्रकाशेऽष्टादशः सर्गः समाप्तः ॥

## एकोनविंशः सर्गः

**निशि दशमितामालिङ्गन्त्यां विबोधविधित्सुभि-**
**र्निषधवसुधामीनाङ्कस्य प्रियाङ्कमुपेयुषः ।**
**श्रुतिमधुपदस्रग्वैदग्धीविभावितभाविक-**
**स्फुटरसभृशाभ्यक्ता वैतालिकैर्जगिरे गिरः ॥ १ ॥**

निशीति ॥ सर्गसंगतिः स्पष्टा । वैतालिकैर्बन्दिभिर्गिरो जगिरे । किंभूतैः—निशि रात्रौ 'बाल्यं वृद्धिर्वपुः पुष्टिः प्रज्ञोत्साहौ बलं महः । दशकेन निवर्तन्ते मनः पञ्चेन्द्रियाणि च' इति वचनाद्दशदशकस्य शतायुषः पुरुषस्यावसानोपलक्षकोऽवस्थाविशेषो दशमः स विद्यते येषां दशमिनो वृद्धास्तेषां भावो दशमिता तामालिङ्गन्त्यामवसानं प्राप्तायां संजातप्रायप्रभातायां सत्यां प्रियाङ्कं भैमीसमीपमुपेयुषः प्राप्तवतस्तया सह निद्रितस्य निषधदेशवसुधायां मीनाङ्कस्य कामस्य नलस्य विबोधं जागरां विधित्सुभिः कर्तुमिच्छुभिः । कीदृश्यो गिरः—श्रोतॄणां श्रुत्योः श्रवणयोर्मधु अमृतरूपाऽतिमधुरा पदस्रक् सुसिङ्क्तपदमाला तस्या वैदग्ध्या वक्रोक्त्यादिरचनाचातुर्येण विभाविता ध्वनिवृत्त्या व्यञ्जनाव्यापारेण प्रकाशिता भाविका रत्यादिस्थायिव्यभिचारिसहचारिरूपैर्भावैर्युक्ता । ज्ञापिता इति यावत् । तादृशाः स्फुटाः प्रसन्नतरत्वेन बालैरपि प्रतीता ये रसाः शृङ्गारादयस्तैर्भृशं नितरामभ्यक्ताः सर्वतः सिक्ताः । एकमपि पदं नीरसं यासु नास्त्यतिरसिकाः नलप्रबोधार्थं मागधैर्मधुरं प्रातर्वर्णनमारब्धमित्यर्थः । रत्यादयः स्थायभावाः, निर्वेदादयस्त्रयस्त्रिंशद्भावाः । 'वैतालिका बोधकराः' इत्यमरः । दशमोऽवस्थाविशेषो विद्यते यस्यासौ दशमी वृद्धः । अत इनिः । योगरूढोयं शब्दः । दशमिन्यां

वृद्धाया भावो दशमितेति वा। विशिष्टस्तालो वितालः स शिल्पं येषां वैतालिकाः 'शिल्पम्' इति ठक्। सौखशायिका इत्यर्थः। तदुक्तम्—'वैतालिकास्तु कथ्यन्ते कविभिः सौखशायिकाः। राज्ञः प्रबोधसमये घण्टाशिल्पास्तु घाण्टिकाः'। जगिरे 'गैशब्दे' कर्मणि तङ्। अस्मिन्सर्गे 'ब्रूमः-' इति यावद्धरिणीछन्दः॥

**जय जय महाराज प्राभातिकीं सुषमामिमां**

**सफलयतमां दानादक्ष्णोर्दरालसपक्ष्मणोः।**

**प्रथमशकुनं शय्योत्थायं तवास्तु विदर्भजा**

**प्रियजनमुखाम्भोजात्तुङ्गं यदङ्ग न मङ्गलम्॥ २॥**

जयेति॥ भो महाराज, त्वं जय जय सर्वोत्कर्षेण वर्तस्व। त्वमिमां प्रत्यक्षदृश्यां प्राभातिकीं प्रातःकालसंध्यादिजनितां सुषमां परमां शोभां दरमीषदलसे तत्कालमेव निद्रात्यागादीषद्घूर्णनयुते अर्धोन्मिषिते पक्ष्मणी ययोरक्ष्णोर्नेत्रयोर्दानाद्विषयीकरणाद्धेतोः सफलयतमामतितरां सफलां कुरु। त्वत्कृतदर्शनेनेयं धन्या भविष्यति तस्माच्छीघ्रमुद्बुध्यस्वेति भावः। विदर्भजा शय्योत्थायं शय्यायाः सकाशादुत्थाय तव प्रथमं पूर्वं प्रातःकालभवं च शकुनं शुभसूचकं वस्त्वस्तु। तत्स्थाने भैम्येव भूयादुत्थितः सन् प्रथमोत्थितभैमीमुखमेव प्रथमं पश्येत्यर्थः। यद्यस्मात्—हे अङ्ग स्वामिन्, प्रियजनस्य मुखाम्भोजादन्यत्तुङ्गमुत्कृष्टं मङ्गलं शुभावहं वस्तु नास्ति। प्रातरुत्थाय प्रथमं प्रियजनमुखं कर्तव्यमिति लौकिकी स्थितिः। त्वत्तः पूर्वं भैम्युत्तिष्ठत्विति भावः। दरालसपक्ष्मत्वं तत्कालमुद्बुद्धस्य जातिः। 'पश्चाच्छयनं पूर्वमुत्थानम्' इति स्मृतिः, उत्तमकुलस्त्रीजातिश्च। जयजयेति वीप्सायां द्विरुक्तिः। प्रभाते भवेति 'कालाट्ठञ्'। सफलयतमाम् 'तत्करोति-' इति ण्यन्ताल्लोटि तमपि 'किमेत्तिङ्-' इत्यामुः। शय्योत्थायम् 'अपादाने परीप्सायाम्' इति णमुल्। परीप्सा त्वरा। 'तृतीयाप्रभृतीनि-' इति समासः॥

**वरुणगृहिणीमाशामासादयन्तममुं रुची-**

**निचयसिचयांशांशभ्रंशक्रमेण निरंशुकम्।**

**तुहिनमहसं पश्यन्तीव प्रसादमिषादसौ**

**निजमुखमितः स्मेरं धत्ते हरेर्महिषी हरित्॥ ३॥**

वरुणेति॥ हे राजन्, हरेरिन्द्रस्य महिषी राज्ञी असौ प्राची हरिद्दिक् इतः प्राग्भागेऽह्नः प्रारम्भभाग एव निजमुखं तिमिरत्यागे प्रसादमिषान्नैर्मल्यव्याजात्स्मेरं सहासं धत्ते बिभर्ति। उत्प्रेक्षते—कथंभूतेव—वरुणस्य गृहिणीं भार्यां प्रतीचीमाशामासादयन्तमभिगच्छन्तम्। अत एव—रुचीनिचयस्य कान्तिसमूहरूपस्य सिचयस्य वस्त्रस्यांशा

१ 'अर्थान्तरन्यासः' इति जीवातुः।

भागास्तेषामप्यंशेन लेशेन भ्रंशस्तस्य क्रमेणैकैकभागापगमक्रमेण निर्गता अंशवो यस्य तं निरंशुकम्, अथ च—विवस्त्रममुं तुहिनमहसं पश्यन्तीव। मय्यनुरक्तस्त्वभ्युदयभागभूत्, इदानीमन्यस्यामनुरक्त इमां दशामापन्नोऽयमितीव हसतीत्यर्थः। अन्यापि नार्यनुरागातिविह्वलं गलद्वस्त्रं परस्त्रीं सेवमानं विटं दृष्ट्वा मुखं स्मेरं करोति। प्राच्यामरुणोदयोऽभूत्, प्रतीच्यां त्वरुणकिरणप्रसरणवशाच्चन्द्रो निष्प्रभोऽस्तं जिगमिषुरस्ति, तस्माच्छीघ्रं बुध्यस्वेति। अंशेन भ्रंशः 'तृतीया—' इति योगविभागात्समासः, ततः पूर्वेण षष्ठीसमासः। इतः सप्तम्यर्थे तसिः। एवंभूतं चन्द्रं पश्यन्ती इतोऽस्माद्धेतोरिवेति। इतो दृश्यमानादस्मात्प्रसादमिषादिति वा संबन्धे पञ्चम्येव॥

**अमहतितरास्तादृक्तारा न लोचनगोचरा-**
**स्तरणिकिरणा द्यामञ्चन्ति क्रमादपरस्पराः।**
**कथयति परिश्रान्तिं रात्रीतमस्सहयुध्वना-**
**मयमपि दरिद्राणप्राणस्तमीदयितस्त्विषाम्॥ ४॥**

अमहतीति॥ भो राजन्, अमहतितराः। स्वरूपेणैव सूक्ष्मतरा ध्रुवारुन्धत्यादयस्तारा इदानीं तादृक् पूर्ववल्लोचनगोचरा न भवन्ति। स्वरूपेण सूक्ष्मत्वात्पूर्वमपि चक्षुष्मतामपि महता यत्नेन या दृश्यन्ते ता इदानीं सर्वथा न दृश्यन्त एवेत्यर्थः। तादृश्यो बहुसंख्याः पूर्वं प्रकाशमानाश्च यास्तारकाः स्वात्यार्द्रादयस्ताः संप्रति सुतरामल्पाः सूक्ष्माश्च सत्यो नेत्रगोचरा न भवन्तीति वा। यस्मात्तरणेः सूर्यस्य किरणा अपरस्परा अहमहमिकया सततमविच्छेदेन प्रवृत्ताः सन्तः क्रमाद्द्यां गगनमञ्चन्ति गाहन्ते। सूर्यकरस्पर्शान्निष्प्रभत्वात्तारा न दृश्यन्त इत्यर्थः। तथा—दरिद्राणाः क्षीणाः प्राणा असवो यस्यैवंभूतोऽस्तं जिगमिषुरयं तमीदयितो निशानाथश्चन्द्रोऽपि रात्रीतमसा सहयुध्वनां संग्रामं कुर्वतीनां निजत्विषां परिश्रान्तिं सामस्त्येन म्लानिं रणपातं च कथयति। न केवलं त्विष एव दरिद्राणप्राणाः किंतु चन्द्रोऽपीत्यपिशब्दार्थः। अतिशयेन महत्यो महतितराः 'घरूप—'इति ह्रस्वः, ततो नञ्समासः। गोचरः पुमान्। अपरे च परे च 'अपरस्पराः क्रियासातत्ये' इति सुट्। द्यां सततमविच्छेदेनाञ्चन्तीत्यर्थः। सहयुध्वनां 'सहे च' इति युधेः क्वनिपि 'वनो र च' इति प्राप्तौ ङीब्रौ 'वनो न हशः' इति निषेधान्न भवतः। दरिद्राणेति 'दरिद्रातेरार्धधातुके—' इत्यादिना प्राप्तोऽप्यालोपो 'न दरिद्रायके लोपो दरिद्राणे च नेष्यते' इत्यादिनिषेधान्न भवति॥

**स्फुरति तिमिरस्तोमः पङ्कप्रपञ्च इवोच्चकैः**
**पुरुसितगरुच्चञ्चच्चञ्चूपुटस्फुटचुम्बितः।**
**अपि मधुकरी कालिमन्या विराजति धूमल-**
**च्छविरिव रवेर्लोक्षालक्ष्मीं करैरतिपातुकैः॥ ५॥**

१ 'अत्र मिषशब्देन प्रसादरूपापह्नवेन पराङ्गनासंगतपुरुषदर्शनजन्मास्मितत्वोत्प्रेक्षणात्सापह्नवोत्प्रेक्षा।' इति जीवातुः। २ 'समुच्चयोलंकारः' इति जीवातुः।

स्फुरतीति ॥ हे राजन्, तिमिरस्य स्तोमः समूहः लाक्षालक्ष्मीमतिपातुकैरतिक्रामद्भिस्ततोऽप्यधिकं रक्ततरै रवेः करैः कृत्वा पुरूणां बहूनां सितगरुतां श्वेतपक्षाणां चञ्चद्भिश्चपलैः, अरुणिम्ना विलसद्भिर्वा, चञ्चूपुटैः स्फुटं यथा तथा चुम्बितः स्पृष्टः पङ्कस्य प्रपञ्चः समूह इवोच्चकैरतितरां स्फुरति शोभते। तिमिरस्तोमोऽन्तराप्रविष्टसूर्यकिरणस्पर्शाद्बिसखननार्थं पङ्कप्रविष्टहंसारुणचपलचञ्चूपुटशबलपङ्कवच्छोभतेतरामित्यर्थः।
तथा—आत्मानं कालीं मन्यते कालिमन्या अतिकृष्णा भ्रमर्येप्यरुणतरैः सूर्यकिरणैर्धूमलच्छविरिव च कृष्णारुणकांतिरिव शोभतेतराम्। सूर्यकराः प्रसृताः, तीमिरं चाल्पीभूतमिति भावः। 'धूमलौ कृष्णलोहितौ' इत्यमरः। उच्चकैरव्ययत्वादकच्। मधुकरी जातिवाचित्वान्ङीष्। कालिमन्या 'आत्ममाने खश् च' इति खश्, दिवादित्वाच्छ्यन्, 'खित्यनव्ययस्य' इति ह्रस्वः, 'अरुर्द्विषद्–' इति मुम्। लाक्षालक्ष्मीं 'न लोका–' इति षष्ठीनिषेधः ॥

**रजनिवमथुप्रालेयाम्भःकणक्रमसंभृतैः**
**कुशकिशलयस्याच्छैरग्रेशयैरुदबिन्दुभिः।**
**सुषिरकुशलेनायःसूचीशिखाङ्कुरसंकरं**
**किमपि गमितान्यन्तर्मुक्ताफलान्यवमेनिरे ॥ ६ ॥**

रजनीति ॥ रजन्याः वमथुवत्करिणीवदननिर्गतजलवत्प्रालेयाम्भसो हिमजलस्य कणा लेशास्तेषां गलनक्रमेण संभृतैः संचितैः कुशकिशलयस्याग्रेशयैरग्रस्थितैः सूचीतीक्ष्णाग्रभागे स्थितैरच्छैर्निर्मलतरैरुदबिन्दुभिर्हिमजलकणैः कर्तृभिर्मुक्ताफलान्यवमेनिरेऽवगणितानि। मौक्तिकतुल्यैर्जातमित्यर्थः। किंभूतानि मुक्ताफलानि—सुषिरे विवरकरणे कुशलेन मणिकारेण मध्ये किमपि लोकोत्तरं, स्तोकं वा, अयःसूच्या लोहसूच्या वेधनशलाकायाः शिखैव सूक्ष्मत्वादङ्कुरस्तेन संकरं संयोगं गमितानि प्रापितान्यर्धविद्धानि।
'वमथुः करिशीकरः' इत्यमरः। 'द्वितोऽथुच्'। अग्रेशयैः 'अधिकरणे शेतेः' इत्यजन्ते शयशब्दे 'शयवास—' इति सप्तम्या अलुक्। सूची 'कृदिकारात्—'ङीष्। संकरं 'ऋदोरप्' ॥

**रविरुचिकृचामौंकारेषु स्फुटामलबिन्दुतां**
**गमयितुममूरुच्चीयन्ते विहायसि तारकाः।**
**स्वरविरचनायासामुच्चैरुदात्ततया हृताः**
**शिशिरमहसो बिम्बादस्मादसंशयमंशवः ॥ ७ ॥**

---

१ 'अत्र काल्या भृङ्ग्या रविकरैर्लौहित्यादिविकारात्तद्गतेन तदुत्थापिता धूमलत्वोत्प्रेक्षेति संकरः' इति जीवातुः। २ अत्र दर्भाग्रबिन्दूनां सूच्यग्रलग्नमुक्ताफलैरुपमा, प्रालेयाम्भःकणेषु वमथुत्वरूपणाद्रजनेः करिणीत्वरूपणसिद्धिरेकदेशावर्तक इत्यनयोरङ्गाङ्गिभावात्संसृष्टिः' इति जीवातुः।

रवीति ॥ रवेः पौर्वाह्णिक्यो रुचय एव ऋचस्तासां [प्रातःकाले रविकिरणानामृग्रूपत्वात्। 'ऋग्भिः पूर्वाह्णे दिवि देव ईयते, यजुर्वेदे तिष्ठति मध्येऽह्नः' इत्यादिश्रुतेः] ऋग्वेदवाक्यानामोंकारेषु प्रारम्भप्रणवेषु, अथ च—लक्षणया प्रारम्भेष्षूदयसमयेषु स्फुटां प्रकटाममलां स्वरोच्चारणादिदोषरहितां बिन्दुतामनुस्वाररूपां गमयितुममूर्विहायसि स्थितास्तारकाः केनाप्युच्चीयन्तेऽवचयेन संगृह्यन्त एव। वृत्तामलत्वाद्योग्यत्वाच्च ऋक्प्रणवबिन्दुनिर्माणार्थमेता गृह्यन्त इव ततो न दृश्यन्त इत्यर्थः। प्रत्यृचमोंकारसद्भावात्तद्बाहुल्यात्ताराबिन्दूनामपि बहुत्वम्। अथ च—उद् ऊर्ध्वं चीयन्ते, नीयन्त इति यावत्। सूर्यप्रभोदय एव तारका नश्यन्तीति भावः। तथा—अस्तमयोन्मुखादस्माच्छिशिरमहसश्चन्द्रस्य बिम्बात्सकाशादंशवोऽप्यासामृचामुच्चैर्नितरामुदूर्ध्वमात्ततया गृहीततया, अथ च—लक्षणावशाद्बिशालतयोपरिस्थिततया वा, अथ च—'उच्चैरुदात्तः' इत्युदात्तलक्षणयोगादुच्चैरुदात्तत्वेन योग्यत्वादुदात्तस्वरस्य विरचनाय निर्माणाय असंशयं निश्चितं केनापि हृता इव। उदात्तस्य शिरस्युपलभ्यमानत्वव्यञ्जिकोर्ध्वा रेखा लिख्यते। यजुर्वेदे चरकशाखायामुपनिषदि 'उच्चैरुदात्तः, (नीचैरनुदात्तः), समाहारस्वरितः' इति लक्षणं द्रष्टव्यम्। चन्द्रकिरणानामप्यस्तमये उपरिगामित्वात्सूक्ष्मोपरितनरेखातुल्यत्वादेवमुत्प्रेक्षितम्। सूर्यप्रभोद्गमक्रमेण चन्द्रकिरणा अपि कृशीभूता इति भावः। वृता इति पाठे—स्वीकृताः। असंशयमुभयत्रापि योज्यम्। रुचिऋचाम् 'ऋत्यकः' इति प्रकृतिभावः॥

**व्रजति कुमुदे दृष्ट्वा मोहं दृशोरपिधायके**
**भवति च नले दूरं तारापतौ च हतौजसि।**
**लघु रघुपतेर्जायां मायामयीमिव रावणि-**
**स्तिमिरचिकुरग्राहं रात्रिं हिनस्ति गभस्तिराट्॥ ८॥**

व्रजतीति॥ गभस्तिराट् सूर्यः तिमिरमेव चिकुरास्तिमिरतुल्याः केशास्तेषु गृहीत्वेति ग्राहं रात्रिं हिनस्ति लघु शीघ्रं विनाशयति। कः कामिव—रावणिरिन्द्रजिन्मायामयीं मायानिर्मितां रघुपतेर्जायां सीतामिव। कस्मिन्सति—वाक्यार्थस्य कर्मत्वात्तदीयं रात्रिहिंसनरूपं कर्म दृष्ट्वा कुमुदे कैरवे मोहं संकोचं व्रजति सति। अथ च—सीताहिंसनरूपं कर्म दृष्ट्वा कुमुदाख्ये वानरे मूर्छां गच्छति। तथा—नले च भवति त्वयि दृष्ट्वा सूर्योदयसमये ज्ञात्वा दृशोरपि धायके उन्मीलितनेत्रे सति। यद्वा—नले त्वयि नेत्रयोराच्छादके भवति सति। अथ च—नले वानरसेनापतौ दारुणं तदीयं कर्म दृष्ट्वा किमपि कर्तुमशक्यत्वाद्दुःखवशाद्वा तारापतौ च सुग्रीवे दृशोरपिधायके हतौजसि च निस्तेजस्के म्लानवदने च सति। रात्रिर्गता, रविरुदितः, कुमुदं च निमीलितम्, कमलं चोन्मीलितम्, चन्द्रश्च निष्प्रभो जात इत्यर्थः। मायामय्याः सीताया वध इन्द्रजिता कृत इति रामायणे। मायामयीं प्राचुर्ये मयटि ङीप्। रावणिरपत्यार्थे बाह्वादित्वादिञ्। चिकुरग्राहं सप्तम्यन्त उपपदे 'समासत्तौ' इति ग्रहेर्णमुल्। गभस्तिभी राजते गभस्तिराट् 'सत्सूद्विष-' इति क्विप्॥

त्रिदशमिथुनक्रीडातल्पे विहायसि गाहते
निधुवनधुतस्रग्भागश्रीभरं ग्रहसंग्रहः।
मृदुतरकराकारैस्तूलोत्करैरुदरंभरिः
परिहरति [1]नाखण्डो गण्डोपधानविधां विधुः॥ ९॥

त्रिदशेति॥ ग्रहसंग्रहः शुक्रादिस्थूलतारासमूहः त्रिदशा देवास्तेषां मिथुनं तस्य क्रीडासंबन्धिनि तल्पे मञ्चरूपे विहायसि गगने निधुवनं सुरतसंमर्दस्तेन धुता विकीर्णाः स्रजः पुष्पमालास्तासां भाग एकदेशस्तस्य श्रीभरं शोभातिशयं गाहते। तथा—विधुरखण्डः पूर्णो वृत्तश्चन्द्रो गण्डोपधानविधां कपोलतलाधःस्थाप्यमानवृत्तं शुभ्रतरोच्छीर्षकप्रकारं न परिहरति न त्यजति, अङ्गीकरोत्येव, तद्वच्छोभत इत्यर्थः। किंभूतो विधुः—मृदुतरकराकारैरतिमृदुरश्मिरूपैस्तूलोत्करैः कार्पाससमूहैरुदरंभरिः परिपूरितमध्यः। गण्डोपधानं मृदुतरकार्पासपूरितमध्यं वृत्तं शुभ्रं च भवति। स्थूलतरास्तारास्तल्पविकीर्यमाणकुसुमतुल्या इतस्ततो दृश्यन्ते। चन्द्रोपि सौरप्रकाशस्यासन्नत्वेन संकुचिताभिः स्वकान्तिभिर्मध्यमेव पूरयन्मर्दितगण्डोपधानवन्निःशोभोऽस्तमयोन्मुखो जात इति भावः। संग्रहः 'ग्रहवृदृनिश्चिगमश्च' इत्यप्। उत्करः 'ऋदोरप्'। उदरंभरिः 'फलेग्रहिरात्मंभरिश्च' इति चकारस्यानुक्तसमुच्चयार्थकत्वादिन् नुमागमश्च॥

दशशतचतुर्वेदीशाखाविवर्तनमूर्तयः
सविधमधुनाऽलंकुर्वन्ति ध्रुवं रविरश्मयः।
वदनकुहरेऽप्यध्येतृणामयं तदुदञ्चति
श्रुतिपदमयस्तेषामेव प्रतिध्वनिरध्वनि॥ १०॥

दशेति॥ दश शतानि यासां ता एकसहस्रसंख्याश्चतुर्णामृग्वेदादिवेदानां समाहारश्चतुर्वेदी तस्याः शाखानामाश्वलायनतैत्तिरीयकादिसंज्ञानां तत्तद्भेदभागानां विवर्तनरूपा अतात्त्विका अन्यथाभावरूपाः शाखारूपतां प्राप्ता मूर्तयः स्वरूपाणि येषां तादृशा रविरश्मयो ध्रुवं यस्मादधुना प्रातःसमये सविधमस्मदादिसमीपदेशं भूषयन्ति सर्वेपि समीपदेशमागच्छन्ति। तत्तस्मादयमध्येतृणां वेदं पठतां वदनलक्षणेषु कुहरेषु दरीषु विषय आकर्ण्यमानवर्णानुरूपस्तेषां वेदशाखीभवन्मूर्तीनां सूर्यकराणामेव श्रुतिपदमयो वेदपदरूपः प्रतिध्वनिः प्रतिशब्दोऽध्वनि गगन उदञ्चत्यूर्ध्वं प्रसरति। दरीषु प्रतिशब्दो युक्तः। अध्वनि मध्यतारध्वनिरहितं यथा तथेति। अध्येतारो हि प्रातर्मन्द्रध्वनिना वेदानधीयते। ध्रुवमुत्प्रेक्षायां वा। सूर्योदयो जातः, अध्येतारश्च वेदानधीयत इत्यर्थः। दशशतेति मूर्तिविशेषणम्। चतुर्वेदी समाहारे द्विगोर्ङीप्। पदमयस्ताद्रूप्ये मयट्॥

---

१ 'अत्र श्रियमिव श्रियम्, विधामिव विधामिति सादृश्याक्षेपादुभयत्र निदर्शनोत्थानात्सजातीयसंसृष्टिः' इति जीवातुः।

नयति भगवानम्भोजस्यानिबन्धनबान्धवः
किमपि मघवप्रासादस्य[1] प्रघाणमुपघ्नताम् ।
अपसरदरिध्वान्तप्रत्यग्वियत्पथमण्डली-
लगनफलदश्रान्तस्वर्णाचलभ्रमविभ्रमः ॥ ११ ॥

नयतीति ॥ अम्भोजस्य कमलकुलस्यानिबन्धनबान्धवोकारणमित्रं तदानन्दकारी भगवान्षड्गुणैश्वर्यसंपन्नः श्रीसूर्यो मघवत इन्द्रस्य वैजयन्ताख्यस्य प्रासादस्य प्रघाणमलिन्दं किमपि स्तोकं यथातथोपघ्नतामाश्रयतां नयति प्रापयत्याश्रयति । तावत्पर्यन्तमूर्ध्वमागत इत्यर्थः । अथ च—तं श्लिष्यति । पराङ्मुखशत्रोः शूरस्य परस्पराश्लेषो युक्तः । किंभूतः—अपसरत्पुरः पलायमानमरिरूपं ध्वान्तं तस्य प्रतीचः पश्चिमाशायाः संबन्धिनि वियत्पथे गगनमार्गे मण्डल्या संघीभावेन यल्लगनं संश्लेषः प्रत्यग्दिगन्तगामित्वम्, लयनमिति पाठे—संघीभावेन यत्तिरोधानं सामस्त्येनादर्शनं तेन फलन्सफलो भवन्नश्रान्तो निरन्तरः स्वर्णाचलस्य मेरोः प्रदक्षिणलक्षणो भ्रमः स एव विभ्रमो विलासो यस्य । सद्वस्तुपरिपालनाय रात्रौ भ्रमतो यामिकस्य चौरपलायनेन यथा साफल्यं भवति तथा स्वर्णाचलरक्षणाय सूर्यस्य भ्रमणविलाससाफल्यं युक्तमित्यर्थः । अत एव स्वर्णाचलपदं प्रायोजि । अत्रापि पूर्वोत्तरार्धविपर्यासो ज्ञातव्यः । 'प्रघाणप्रघणालिन्दाः' इत्यमरः । बान्धवः प्रज्ञादित्वात्स्वार्थेऽण् । मघवप्रासादस्य प्रातिपदिकान्तत्वान्नलोपः । 'अगारैकदेशे प्रघणः प्रघाणश्च' (इति) 'उपघ्न आश्रये' इति च प्रघाणोपघ्नशब्दौ साधू । प्रत्यक् 'दिक्शब्देभ्यः-' इत्यस्तातेः 'अञ्चेर्लुक्' इति लुक् । 'तसिलादिस्तद्धितः' इत्यव्ययत्वम् ॥

नभसि महसां ध्वान्तध्वाङ्क्षप्रमापणपत्रिणा-
मिह विहरणैः श्यैनंपातां रवेरवधारयन् ।
शशविशसनत्रासादाशामयाच्चरमां शशी
तदधिगमनात्तारापारापतैरुदडीयत ॥ १२ ॥

नभसीति ॥ शशी निजाङ्कवर्तिशशाख्यपशुविशेषस्य विशसनं मारणं तस्माद्यस्त्रासो भयं तस्माच्चरमामाशां पश्चिमां दिशमयाद्ययौ । तथा—तारा नक्षत्राणि तद्रूपैः पारापतैस्तस्य चन्द्रपलायनवृत्तान्तस्य सूर्यस्य मृगयारम्भवृत्तान्तस्य चाधिगमनात्परिज्ञानादुदडीयत पलायितम् । किंविधः शशी—नभसि गगने ध्वान्तमन्धकारस्तद्रूपाणां ध्वाङ्क्षाणां काकानां प्रमापणे मारणे विषये पत्रिणां श्येनाख्यपक्षिरूपाणां महसां सूर्यतेजसामिह प्राग्भागे विहरणैः क्रीडनैः रवेः श्रीसूर्यस्य श्यैनंपातां मृगयामवधारयन्निर्धारयन् । अन्यस्मिन्नपि राज्ञि मृगयाश्येनपातेन काकादीन् हिंसति सति शशयुक्तः पुरुषो मदीयं शशमपि मांसार्थमेतदीयाः श्येना हनिष्यन्तीति भिया पलाय्य गच्छति । पारा-

[1] मघवत्प्रासादस्येति पाठो बहुपुस्तकस्थः ।

पता अप्युड्डीय यान्ति। सूर्यकिरणा गगने खेलन्ति, चन्द्रः प्रतीचीं गतः, ताराश्च न दृश्यन्त इति भावः। इह नभसीति वा। शशेन नित्ययुक्तः शशी। त्रासादिव, तदधिगमनादिवेति च प्रतीयमानोत्प्रेक्षा। 'अथ शशादनः। पत्त्री श्येनः','श्यैनंपाता च मृगया' 'पारापतः कलरवः' इत्यमरः। पतनं पातः। भावे घञ्, श्येनानां पातः श्येनपातः सोऽस्यां क्रियायां वर्तते श्यैनंपाता मृगयेति 'घञः सास्यां क्रिया-' इति ञः, 'श्येनतिलस्य-' इति मुम्॥

**भृशमबिभरुस्तारा हाराच्च्युता इव मौक्तिकाः**

**सुरसुरतजक्रीडालूनाद्द्युसद्वियदङ्गणम्।**

**बहुकरकृतात्प्रातः समार्जनादधुना पुन-**

**र्निरुपधिनिजावस्थालक्ष्मीविलक्षणमीक्ष्यते॥ १३॥**

भृशमिति॥ सुरसुरतं देवमिथुनरतं तस्माज्जाता क्रीडा विलाससंमर्दः, अथ च—सुरतुल्यराजादिरतक्रीडासंमर्दः, तेन लूनात्त्रुटिताद्धाराच्च्युता मुक्ता इव वृत्ततरास्तारा द्युसद्वियदङ्गणं सुराणामजिरभूतं यद्गगनं भृशं नितरामबिभरुरपूपुरन्। तद्गगनमधुना पुनः बहवः सहस्रं करा यस्य स सूर्यस्तेन अथ, च—रजःशोधकेन खलप्वा कृतात्प्रातःसंमार्जनात्प्राभातिकात्सम्यङ्मार्जनात्तिमिरनिराकरणद्वारा शोधनात्, अथ च—शोधन्या रजोपनयनेन शोधनान्निरुपधिरुपाधिरहिता स्वाभाविकी निजावस्था सहजदशा तस्याः श्रिया कृत्वा तमीसंबन्धिशोभात्यागात्, अथ च—रजः पुष्पमालामुक्ताद्युपाधित्याजनात्, सहजश्रिया विलक्षणमन्यादृशमीक्ष्यते विलोक्यते। सूर्यकरैर्गगनं भूषितम्, ताराश्च सर्वथा न दृश्यन्त इत्यर्थः। द्युसदिति पाठे—हस्ताभिनयादतिमहदित्यर्थः। 'खलपूः स्याद्बहुकरः' इत्यमरः। अबिभरुः, 'सिजभ्यस्त-' इति झेर्जुस्। दिवि सीदन्तीति द्युसदः, 'सत्सूद्विष-'इति क्विप् 'द्वद्युभ्यां ङेरुपसंख्यानम्' इत्यलुक्प्राप्तावपि 'तत्पुरुषे कृति बहुलम्' इति बाहुलकान्ङेर्लुक्, 'दिव उत्', 'सात्पदाद्योः' इति षत्वनिषेधः। बहुकरः, खलपूपक्षे 'दिवाविभा-'इति टः। उपधिः 'उपसर्गे घोः, किः'॥

**प्रथममुपहृत्यार्घं तारैरखण्डिततण्डुलै-**

**स्तिमिरपरिषद्दूर्वापर्वावलीशबलीकृतैः।**

**अथ रविरुचां ग्रासातिथ्यं नभः स्वविहारिभिः**

**सृजति शिशिरक्षोदश्रेणीमयैरुदसक्तुभिः॥ १४॥**

प्रथममिति॥ नभः कर्तृ रविरुचां तिमिरपरिषत्तमःसमूहस्तद्रूपा दूर्वापर्वाल्यो दूर्वाग्रन्थिपरंपरास्ताभिः शबलीकृतैः कर्बुरीकृतैर्मिश्रितैस्तारैर्नक्षत्ररूपैरुज्ज्वलैश्चाखण्डितत-

---

१ 'रूपकालंकारः' इति जीवातुः।

ण्डुलैरभग्ननिस्तुषशालिबीजैः कृत्वाऽर्घं पूजां प्रथममुपहृत्य दत्त्वा, अथानन्तरमेव स्वविहारिभिः स्वस्मिन्वर्तमानैः स्वसत्ताकैश्च शिशिरस्य हिमस्य क्षोदश्चूर्णबिन्दवस्तेषां श्रेणीमयैः परम्परारूपैरुदसक्तुभिर्जलमिश्रयवचूर्णैर्ग्रासातिथ्यं भोज्यान्नदानलक्षणमतिथिपूजनं सृजति करोति। अन्योपि तण्डुलदूर्वादलयुतेन जलेन पूर्वमर्घं दत्त्वा सक्त्वादिना स्वगृहप्राप्तायातिथये भोज्यं ददाति। सूर्यदीप्तयः पूर्वं तारास्तिमिरं च हिमजलकणानप्यपनयन्ति सेति भावः। 'मूल्ये पूजाविधावर्घः','मुक्ताशुद्धौ च तारः स्यात्' इत्यमरः। अत्र तारशब्दः पुंलिङ्गः। तारयति सांयात्रिकानिति ण्यन्तात्तरतेः पचाद्यच्। रविरुचां संबन्धसामान्ये विवक्षया षष्ठी। उदकयुक्ताः, सक्तवः मध्यमपदलोपी, उदकानि च सक्तवश्चेति वा समासः। 'मन्थौदन-' इत्युदादेशः।

**असुरहितमप्यादित्योत्थां विपत्तिमुपागतं**
**दितिसुतगुरुः प्राणैर्योक्तुं न किं कचवत्तमः।**
**पठति लुठतीं कण्ठे विद्यामयं मृतजीवनीं**
**यदि न वहते संध्यामौनव्रतव्ययभीरुताम् ॥ १५ ॥**

अस्विति॥ दितिसुता दैत्यास्तेषां गुरुः शुक्र आदित्येभ्यो देवेभ्यो हेतुभ्य उत्थां जाताम्, अथ च—सूर्यात्संजातां विपत्तिं मरणं नाशं च कचवद्बृहस्पतिपुत्रवदुपागतं प्राप्तमसुरेभ्यो हितमपि तेषां रात्रिचरत्वादनुकूलमपि तमः प्राणैर्योक्तुं संयोजयितुं कण्ठे लुठतीं जाग्रद्रूपां मृतानां जीवनीमित्यनुगतार्थां विद्यां किं न पठति, अपि तु स्पष्टं पठेदेव। परं चेदयं शुक्राचार्यः प्रातःकालीनसंध्यायां मौनव्रतं मौनलक्षणो नियमस्तस्य व्ययो भङ्गस्तस्माद्भीरुतां भयशीलत्वं यदि न वहते न धारयेत्, तर्हीति संबन्धः। पठति वहते कालसामान्ये लट्। लुठतीम्, वैकल्पिकत्वान्नुमभावः॥

**उदयशिखरिप्रस्थान्यह्ना रणेऽत्र निशः क्षणे**
**दधति विहरत्पूषाण्यूष्मद्रुताश्मजतुस्रवान्।**
**उदयदरुणप्रह्वीभावादरादरुणानुजे**
**मिलति किमु तत्सङ्गाच्छङ्कया नवेष्टकवेष्टना ॥ १६ ॥**

उदयेति॥ अह्ना दिनेन सह निशो रात्रे रणे सङ्ग्रामरूपेऽत्रास्मिन्क्षणे। प्रातःकाल इत्यर्थः। तत्रोदयशिखरी उदयाचलस्तस्य प्रस्थानि शिखराणि कर्तॄण्यूष्मभिः प्रातःकालीनातपसंतापैः द्रुतानामश्मजतूनां शिलाजतूनां स्रवान्प्रवाहान्दधति। यद्वा—क्षण उत्सवतुल्ये रात्रिविनाशकारित्वात्सङ्ग्राम इव सङ्ग्रामे विहरंस्तयोर्युद्धकौतुकदर्शनेन परिक्रीडमानः पूषा सूर्यो ग्रहराजो यत्रैवंभूतान्युदयाचलसानूनि बालातपसंतापविलीनशिलाजतुस्रवत्प्रवाहानेव कियत्कालविलम्बधूमलीभूतरुधिरप्रवाहान्धारयन्ति। रण-

भूमिषु हि कालविलम्बेन धूमला रुधिरप्रवाहा भवन्ति । अत एव—उदयन्नुदयं प्राप्नुवन्नरुणोऽग्रजस्तत्संबन्धिनि प्रह्वीभावे नमस्कारे विषये य आदरो भक्त्यतिशयस्तस्माद्धेतोररुणानुजे मिलति संगमं प्राप्नुवति सति तयोररुणगरुडयोः सङ्गान्मेलनाद्धेतोः रक्तप्रदीप्त्या नवास्तत्कालमापाकादाकृष्टा इष्टका यत्र तादृशी नूतनेष्टकानिर्मिता वेष्टना, नवा इष्टका यत्र शिल्पे तन्नवेष्टकं तेन (वा) वेष्टना प्राकारः किमु न शङ्क्या न तर्क्या, अपि तु सैव तर्क्येत्यर्थः । परिवारभूते दिनप्रकाशे युध्यमाने तद्दर्शिनो लीलाविहारिणो ग्रहराजस्य स्वामिनो महाराजोचितगैरिकसुवर्णभूषितनवेष्टकानिर्मितप्राकारोर्ध्वस्थितिरुचिता संभाव्यते । अथ च—दिनरात्र्योः सेनानीभूतयोः सङ्ग्राम उदयाचलसानूनि तद्भटतुल्यानि रुधिरं धारयन्ति । भटाः प्रहारवशाद्रक्तसिक्ता भवन्ति । तत्र च दिनपक्षीयप्रस्थानां जयित्वात्सुवर्णमयगरुडसंपर्काद्धेष्टकस्य वेष्टना सुवर्णपट्टिकाया धारणा न तर्क्या किमु, अपि तु जयिनां तया भवितव्यमेवेति । गरुडस्तेषां सुवर्णमयवीर (विरुद) पट्टिकास्थाने जात इत्युचितमित्यर्थः । नवेष्टकवेष्टनेति, 'स्त्रियाः पुंवत्-' इति पुंवत् । वेष्टकः, कर्तरि ण्वुल् ॥

**रविरथहयानश्वस्यन्ति ध्रुवं वडवा बल-**
**प्रतिबलबलावस्थायिन्यः समीक्ष्य समीपगान् ।**
**निजपरिवृढं गाढप्रेमा रथाङ्गविहंगमी**
**स्मरशरपराधीनस्वान्ता वृषस्यति संप्रति ॥ १७ ॥**

रवीति ॥ भो राजन्, संप्रति प्रातःकाले बलस्य दैत्यस्य प्रतिबलः शत्रुः प्राचीवर्तीन्द्रस्तस्य बलं सैन्यं तत्रावस्थायिन्यो मध्यवर्तिन्यो वडवास्तुरङ्ग्यो गाढप्रेमाः सूर्याश्वेषु दृढानुरागाः सत्यो रविरथहयान्समीपगान्समीक्ष्य मैथुनार्थमात्मनोऽश्वानिच्छन्ति ध्रुवमुत्प्रेक्षायाम्, निश्चितं वा । इच्छन्तीवेत्यर्थः । यतः—स्मरशरपराधीनं स्वान्तं चित्तं यासाम् । तथा—रथाङ्गविहंगमी चक्रवाक्यपि निजं स्वीयं परिवृढं चक्रवाकमिदानीं प्रातः, समीपमागतं दृष्ट्वा कामबाणवशचित्ता, अत एव—रात्रिवियोगेन दृढानुरागा सती मैथुनवाञ्छया वृषस्यति । वृषवद्बलवन्तं तं मैथुनार्थं कामयत इत्यर्थः । सूर्याश्वाः पूर्वस्यामागताः, चक्रवाकयोश्च संगमो जात इति भावः । अश्वस्यति वृषस्यति आत्मनोऽश्वानिच्छति वृषमिच्छति च, क्यचि 'अश्ववृषयोर्मैथुनेच्छायाम्' इति मैथुनेच्छायामसुगागमः । व्युत्पत्तिमात्रं चैतत् । रूढ्या तु मैथुनार्थमिच्छन्तीत्येवार्थः । तथाच—'वृषस्यन्ती तु कामुकी' इत्यमरः । 'इति रामो वृषस्यन्तीम्' इति च कालिदासः । 'प्रभौ परिवृढः' इति निपातः । गाढप्रेमेति, 'डाबुभाभ्याम्-' इति पक्षद्वयेऽपि डाप् । डापो वैकल्पिकत्वादेकत्र नान्तता(पि) । विहंगमी, जातित्वान्ङीप् । रथाङ्गं चासौ विहंगमी चेति समासः ॥

**निशि निरशनाः क्षीरस्यन्तः क्षुधाऽश्वकिशोरका**
**मधुरमधुरं हेषन्ते ते विलोलितवालधि ।**

तुरगसमजः स्थानोत्थायं क्वणन्मणिमन्थभू-
धरभवशिलालेहायेहाचणो लवणस्यति ॥ १८ ॥

निशीति ॥ भो राजन्, निशि रात्रौ निरशना निराहाराः, अत एव—क्षुधा क्षीरस्यन्त आत्मनोऽत्यर्थं क्षीरं दुग्धमिच्छन्तः ते अश्वकिशोरका अतिप्रसिद्धा अश्वबालकाः मधुरमधुरं यथातथातिकलशब्दं, तथा—विलोलिताः पुनःपुनश्चालिता वालधयः पुच्छानि यस्यां क्रियायां तद्यथा तथा हेषन्ते हेषारवं कुर्वन्ति । तथा—तत्र मन्दुरायां स्थितस्तुरगाणां समजः समूहः स्थानोत्थायं शय्यास्थानाच्छीघ्रमुत्थाय क्वणन् हेषमाणः मणिमन्थनामके भूधरे भवानां जातानां शिलानां सैन्धवशिलानां लेहायास्वादनाय ईहया इच्छया पुनःपुनर्मुखादिचालनचेष्टया वा चणः ख्यातः सन् लवणस्यत्यात्मनो लोलुपत्वेन लवणमिच्छति । अश्वकिशोरकाः प्रातः क्षीरपानार्थं हेषन्ते, अश्वास्तु प्रातः सैन्धवास्वादनाय हेषन्त इति जातिः । सूर्योदयो जात इत्यर्थः । क्षीरस्यन्तो, लवणस्यन्तीत्यत्र चात्मेच्छायां क्यचि 'अश्वक्षीर-' इत्यादिना 'क्षीरलवणयोर्लालसायाम्' इति वचनाल्लालसायामसुक् । किशोरकाः, 'अल्पे' इति कन् । मधुरमधुरं प्रकारे द्विः । 'हेषृ स्वने' । समजः पशुविषयत्वात् 'समुदोरजः पशुषु' इत्यप् । स्थानोत्थायम् । 'अपादाने परीप्सायाम्' इति णमुल् । लेहः, भावे घञ् ॥

उडुपरिषदः किं नार्हत्वं निशः किमु नौचिती
पतिरिह न यद्दृष्टस्ताभ्यां गणेयरुचीगणः ।
स्फुटमुडुपतेराश्मं वक्षः स्फुरन्मलिनाश्मन-
च्छवि यदनयोर्विच्छेदेपि द्रुतं बत न द्रुतम् ॥ १९ ॥

उड्विति ॥ हे राजन्, उडुपरिषदो नक्षत्रपरम्पराया अर्हत्वं किं न, अपि त्वौचित्यमेवैतत् । तथा—निशो रात्रेरौचिती न किमु, अपि त्वौचित्यमेव । यद्यस्मात्ताभ्यां तारापङ्क्तिविभावरीभ्यां गणेयोऽल्पो रुचीगणो दीप्तिसमूहः (यस्य स) क्षीणतेजाः पतिः प्राणेशश्चन्द्र इहास्मिन्समये न दृष्टः । तस्मात्तयोरौचित्यमेवेत्यर्थः । 'धन्यास्तात न पश्यन्ति पतिभङ्गं कुलक्षयम् ।' इति वचनात्पतिविपदमदृष्ट्वैव द्वयोरपि ध्वस्तत्वादौचित्येव जातेत्यर्थः । स्फुरन्ती प्रकाशमाना कलङ्कव्याजेन मलिना कृष्णा आश्मनी पाषाणसंबन्धिनी छविः कान्तिर्यस्यैवंभूतमुडुपतेर्वक्षो मध्यम्, अथ च—हृदयम्, स्फुटं निश्चितमाश्मं पाषाणविकाररूपम् । पाषाणघटितमिवातिकठिनं मलिनं चेत्यर्थः । यद्यस्मादनयोस्ताराराज्योर्विच्छेदे वियोगे, अथ च—विनाशे, सत्यपि द्रुतं शीघ्रं न द्रुतं स्फुटितम् । पाषाणनिर्मितमेवेत्यर्थः । बत खेदे । यत् । वक्षोविशेषणं वा । स्वस्यापि विलये निकटे सत्यपि तत्पतिना चन्द्रेण स्वप्रेयस्योः प्रेम न दर्शितमिति तस्यानौचितीत्यर्थः । तारापरम्परा रात्रिश्च विनष्टा । चन्द्रोपि क्षीणतेजा आसन्ननाशो जात इत्यर्थः । आर्हन्तीति पाठे—'अर्हः प्रशंसायाम्' इति शतरि, अर्हतो भाव इति ब्राह्मणादित्वात्ष्यञि षित्वान्ङीषि 'अर्हतो नुम्

च' इति तुम् । आश्मं, विकारेऽणि 'अश्मनो विकारे टिलोपः' इति टिलोपः । आश्मनेति संबन्धेऽणि विकाराभावाट्टिलोपाभावे आश्मनी चासौ छविश्चेति समासे 'पुंवत्कर्मधारय-' इति पुंवत् ॥

**अरुणकिरणे वह्नौ लाजानुडूनि जुहोति या**
**परिणयति तां संध्यामेतामवैमि मणिर्दिवः ॥**
**इयमिव स एवाग्निभ्रान्तिं करोति पुरा यतः**
**करमपि न कस्तस्यैवोत्कः सकौतुकमीक्षितुम् ॥ २० ॥**

अरुणेति ॥ भो राजन्, या संध्या अरुणस्य किरणरूपे वह्नौ उडूनि नक्षत्राण्येव लाजाञ्जुहोति, दिवो मणिस्तामेतां प्रातःसंध्यां परितो नयति प्रापयति विवाहयतीत्यहमवैमि मन्ये । यत इयमिव संध्या यथा रक्तवर्णत्वादग्निभ्रान्तिं विपर्ययज्ञानं पुरा करोत्यकरोत् । यद्वा—यथेयं करोति, तथा स एव सूर्योऽपि रक्ततरत्वादुष्णकरत्वाच्च वह्निबुद्धिं पुरा करोत्युदितमात्र एव करिष्यति । अथचेयं संध्या पुरा प्रथमं वह्निप्रदक्षिणपरिभ्रमणं यथा करोति, तथैवास्या अनन्तरमेव सूर्योऽपि वह्निप्रदक्षिणपरिभ्रमणमिदानीमेव करिष्यति । एवकारोऽप्यर्थः । यतश्च सकौतुकं यथा तथा तस्य सूर्यस्यैव करं किरणमपीक्षितुं कः पुरुषो नोत्कः नोत्क्षिप्तजलः, अपितु मन्देहराक्षसनिराकरणद्वाराऽस्य किरणमीक्षितुं सर्वोऽप्यर्घ्यदानं करोतीत्यर्थः । अथच—सकौतुकं माङ्गलिकसूत्रकङ्कणेन सह तस्य विवोढुः सूर्यस्यैव हस्तमपि वीक्षितुं कः पुरुषो नोन्मनाः, अपि तु—सकङ्कणं वरकरं सर्वोऽपि द्रष्टुमुत्कण्ठित एव । या च वधूः परिणीयते, सा प्रदीप्ते वह्नौ लाजाञ्जुहोति । सा च वह्निं पूर्वं प्रदक्षिणीकरोति, वरोऽपि तया सह पश्चात्प्रदक्षिणीकरोतीति संध्यासूर्ययोर्वधूवरत्वमुक्तम् । अरुणोदयो जातः, तत्प्रभया च तारा न दृश्यन्ते, संध्यासमयश्च जातः, अधुना रविरुदेतीति भावः । 'कौतुकं कुतुके ख्यातं हस्तसूत्रेऽपि कथ्यते' इति विश्वः । किरण इति पक्षे जातावेकवचनम् । परिणयति, णोपदेशत्वाण्णत्वम् । इयमिव पुरा करोतीति पक्षे 'पुरि लुङ्चास्मे' इति लट् । पक्षान्तरे तु 'यावत्पुरानिपातयोर्लट्' इति भविष्यति लट् ॥

**रतिरतिपतिद्वैतश्रीकौ धुरं बिभृमस्तरां**
**प्रियवचसि यन्नग्नाचार्या वदामतमां ततः ।**
**अपि विरचितो विघ्नः पुण्यद्रुहः खलु नर्मणः**
**परुषमरुषे नैकस्यै वामुदेति मुदेऽपि तत् ॥ २१ ॥**

रतीति ॥ रतिरतिपत्यो रतिकामयोर्द्वितैव द्वैतम् । रतिद्वैतं कामद्वैतं चेति यावत् । तस्येव श्रीर्ययोस्तत्संबोधनं हे भैमीनलौ, नग्नानां बन्दिनामाचार्या वैतालिका वयं प्रियेऽनुकूले वचसि यद्यस्माद्धुरं भारं बिभृमस्तरां चाटुवचनेषु वयमेव प्रगल्भतरास्ततस्त-

स्माद्वदामतमामतितमां ब्रुवाम । सूर्योदयो जातः, तस्मात्क्रीडां त्यक्त्वा शीघ्रं शय्याया उत्तिष्ठतमिति वचनेऽस्माकं प्राप्तःकाल इति धाष्ट्र्येन ब्रूम इत्यर्थः । यद्यूयं प्रियवचनचतुरास्तर्ह्येवं परुषं किमिति वदथेत्याशङ्क्याह—तदस्मदुक्तं परुषं वच एव पुण्यद्रुहः प्रातःकालीनस्नानसंध्यादिधर्मविरोधिनः नर्मणः प्रातःकालीनालिङ्गनचुम्बनादिविलासस्य पुनः प्रबोधपूर्वमुत्थापनाद्विरचितः परुषरूपो विघ्नोऽपि वां युवयोरेकस्यै अरुषे केवलाय क्रोधाभावाय उदेत्विति न, किंतु खलु निश्चितं मुदेऽपि हर्षायाप्युदेतु । यद्यप्येतत्परुषमुक्तम्, तथापि रोषो न कार्यः परुषस्यापि पुण्यहेतुत्वाद्धर्षोऽपि यस्माद्भविष्यति । तथा च हितवादित्व एव तात्पर्यात्प्रियवचनचातुर्यमव्याहतमेवेत्यर्थः । क्रीडां विहाय शीघ्रमुत्तिष्ठतमिति भावः । रतीत्यादिविशेषणेन द्वयोरौचिती सूचिता । वां युवयोर्मध्येऽरुषे रोषहीनायै एकस्यै भैम्यै मुदे नोदेतु भैम्याः संभोगप्रियत्वान्नर्मविघ्ने यद्यपि संतोषो न भवेत्, तथापि तव प्रियपुण्यत्वादेवास्माभिरुच्यत इत्यर्थ इति वा । भैम्यै कोपाभावायापि नोदेतु मुदेऽपि नोदेतु । भैम्या रोषो वास्तु हर्षोऽपि वा माभूत्, तथापि समयोचितमुच्यत एवेति वा । तत्तस्मादवसरोचितभाषित्वात्पुण्यद्रुहो नर्मणः परुषं यथा तथा विरचितो विघ्नोऽपि निश्चितमकोपाय केवलमुदेत्विति न, किंतु मुदेऽप्युदेतु । सदा स्वोपजीविनाभिहितेऽपि परुषे रोषो न भवति, किंतु हर्ष एव भवतीत्यर्थ इति वा । किंच प्रियवचःप्रवीणा अपि वयं यतो नग्नाचार्या जितलज्जाः, अतः स्वच्छन्दं वदाम इति भावः । 'नग्नो बन्दिक्षपणयोर्विवस्त्रे तु' इति विश्वः । द्वैतं पूर्ववत् । 'शेषाद्विभाषा' इति कप् । वदामतमां, 'प्रैषातिसर्ग–' इति प्राप्तकाले लोट् । 'तिङश्च' इत्यतिशये तमप् । पुण्यद्रुहः 'सत्सूद्विष–' इति क्विप् । उदेतीति पाठे—'वर्तमानसामीप्ये—' इति लट् । एकस्यै, तादर्थ्यमात्रविवक्षया चतुर्थी ॥

**भव लघुयुताकान्तः संध्यामुपास्स्व तपोमल**
**त्वरयति कथं संध्येयं त्वां न नाम निशानुजा ।**
**द्युतिपतिरथावश्यं कारी दिनोदयमासिता**
**हरिपतिहरित्पूर्णभ्रूणायिता कियतः क्षणान् ॥ २२ ॥**

भवेति ॥ हे राजन्, त्वं तस्माल्लघु शीघ्रं युता पृथग्भूता कान्ता यस्मादेवंभूतो भव । इदानीं भैम्या सह क्रीडां त्यज, ततः संध्यां नित्यकृत्योपासनामुपास्स्व कुरु । हे तपसा नित्यकर्माद्यनुष्ठानरूपेणामलोज्ज्वल निर्दोष, निशानुजा रात्र्यनन्तरजाता प्राभातिकीयं संध्या त्वां कथं नाम न त्वरयति, अपि तु त्वरयत्येव । अथ मुहूर्तानन्तरक्षणे द्युतिपतिः सूर्यो दिनोदयं दिवसप्रारम्भमवश्यंकारी अवश्यं करिष्यति । उदेष्यतीत्यर्थः । यतः—हरिरिन्द्रः पतिर्यस्यास्तस्या हरितो दिशः प्राच्याः पूर्णभ्रूणो दशमासगर्भ इवाचरितो रक्ततरः कियतस्त्रिचतुरानेव क्षणान्नासिता स्थाता । प्रातःसंध्यायाः सूर्योदयात्प्रागेव विधानाच्छीघ्रमुत्थाय प्रातःसंध्यामुपास्स्वेत्यर्थः । युतेति, 'यु मिश्रणामिश्रणे' क्तः । त्यक्तादिपदत्यागेनामङ्गलप्रतीतिपरिहारार्थं युतेतिश्लिष्टपदं प्रायोजि । संध्यापदेन कर्मानुष्ठानपर्यन्तमेव कान्तारहितो भव, तदनन्तरं पुनरपि युता संयुक्ता कान्ता येनेति मिश्रण-

मपि विवक्षितम्, एतदर्थमेतत्प्रायोजि वा। कान्ताशब्दस्य प्रियादित्वाद्युतेत्यस्य न पुंवत्। त्वरयति, हेतुमण्णिच्। कारीति भविष्यत्यावश्यके णिनिः। तद्योगे च 'अकेनोः-' इति निषेधाद्दिनोदयमिति षष्ठ्यभावः। आसिता, लुट्। भ्रूणायितः, आचारक्यङन्तात् क्तः। क्षणान्, कालवाचित्वाद्द्वितीया॥

**मुषितमनसश्चित्तं भैमि त्वयाद्य कलागृहै-**

**र्निषधवसुधानाथस्यापि श्लथश्लथता विधौ।**

**अजगणदयं संध्यां वन्ध्यां विधाय न दूषणं**

**नमसितुमना यन्नाम स्यान्न संप्रति पूषणम्॥ २३॥**

मुषितेति॥ हे भैमि, चतुःषष्टिकलानां गृहैर्निवासभूतयाद्य मुषितं चोरितं मनो यस्यापहृतचित्तस्य त्याजितस्वभावस्य वा निषधवसुधानाथस्य नलस्यापि विधौ श्रुतिविहितसंध्यादिनित्यकर्मणि विषये श्लथश्लथता श्लथप्रकारता आलस्यातिशयोऽनादरातिशयो वा वर्तत इति चित्रम्। परमधार्मिकोऽप्यनेककलाभिज्ञत्वात्त्वया स्ववशीकारेण धर्मविमुखः कृत इत्याश्चर्यम्। अनुचितमेतदित्यर्थः। अथ च—कलानिधिभूतया त्वया मुषितमनस्कत्वात्कलानिधौ विधावप्यनादर इति चित्रम्। कथं शैथिल्यमित्यत आह—यद्यस्मात्परमधार्मिकोऽप्ययं संध्यां संध्योपलक्षितं प्रातःकालं वन्ध्यां नित्यस्नानादिप्रातःकृत्यरहितं विधाय कृत्वा विहिताकरणजन्यं दूषणं नाजगणत्। यच्च संप्रति पूषणं सूर्यं नमसितुमना नमस्कर्तुकामोऽपि न स्याद्भवति। नामाप्यर्थे। परित्यक्तनित्यकर्मा सूर्यस्य नमस्कारमपि न करोतीत्युपालम्भः। अन्योपि कामी कस्यांचिदासक्तो निजधर्मपत्नीमसंभुञ्जानो वन्ध्यां विधत्ते, दोषं न गणयति, संभोगविघ्नभूतत्वाद्दिनकरमपि नाद्रियते तथायमपि। संध्यादिनित्यकर्मानुष्ठानार्थं क्षणमिमं मुञ्चेति भावः। गृहस्य पुंस्त्वाद्बहुवचनान्तत्वेपि त्वयेत्यनेन सामानाधिकरण्यं युक्तम्। स्यात्, संभावने लिङ्॥

**न विदुषितरा कापि त्वत्तस्ततो नियतक्रिया-**

**पतनदुरिते हेतुर्भर्तुर्मनस्विनि मा स्म भूः।**

**अनिशभवदत्यागादेनं जनः खलु कामुकी-**

**सुभगमभिधास्यत्युद्दामा पराङ्कवदावदः॥ २४॥**

नेति॥ भो मनस्विन्यतिधैर्ययुक्ते सावधाने वा, त्वत्सकाशाद्विदुषितरातितरां पण्डिता सर्वलोकशास्त्ररहस्यं विदुषी काप्यन्या यद्यस्मान्नास्ति ततस्तस्माद्भर्तुर्नलस्य नियतक्रियापतनान्नित्यसंध्यादिकर्मलोपाद्यद्दुरितं तत्र त्वं हेतुर्मा स्म भूः। संध्याद्यनुष्ठानार्थं शीघ्रमेनं मुञ्चेत्यर्थः। किंच—खलु यस्मादुद्दामा निरङ्कुशोऽत एव पराङ्कवदावदोन्यदीयकलङ्कभाषणशीलो जनोनिशं भवत्या अत्यागात्, भवत्या कर्तृभूतया वामोच-

नाद्धेतोरेनं नलं कामुक्यामतितरां मैथुनेच्छावत्यां सुभगं तत्परवशं कामुकी पूर्वोक्ता सुभगा सौभाग्यवती भवादृशी स्त्री यस्य एवंभूतं वा अभिधास्यति वदिष्यति। स्त्रीपरवशत्वादयं नित्यकर्मापि त्यजतीति निन्दां करिष्यति तस्माद्विहिताकरणप्रत्यवायलोकगर्हादिपरिहारार्थमेनं मुञ्चेति भावः। विदुषितरा, उगित्त्वान्ङीपि तरपि 'उगितश्च' इति पक्षे ह्रस्वः। भवदत्यागात्सर्वनामत्वात्पुंवत्। पूर्वेण सह मयूरव्यंसकादित्वात्समासः। सुभगाशब्दस्य प्रियादित्वात्पूर्वस्य न पुंवत्। वदतीति वदावदः, पचाद्यच् 'चरिचलि–' इत्यादिना द्वित्वमभ्यासस्यागागमश्च॥

**रह सहचरीमेतां राजन्नपि स्त्रितमां क्षणं**
**तरणिकिरणैः स्तोकान्मुक्तैः समालभते नभः।**
**उदधिनिरयद्भास्वत्स्वर्णोदकुम्भदिदृक्षुतां**
**दधति नलिनं प्रस्थायिन्यः श्रियः कुमुदान्मुदा॥ २५॥**

रहेति॥ हे राजन्, त्वं सहचरीं सदा सहचरणशीलाम्, तथा—स्त्रितमां स्त्रीषु श्रेष्ठामेवंभूतामप्येनां क्षणमात्रं रह मुञ्च। यतः—नभः स्तोकान्मुक्तैरल्पनिर्गतैर्बालैस्तरणेः सूर्यस्य किरणैः समालभत आत्मनः कुङ्कुमानुलेपनं करोति। तथा—संकुचतः कुमुदात्सकाशाद्विकासोन्मुखं नलिनं कमलवनं प्रतिमुदा प्रस्थायिन्यः प्रस्थास्यन्ते तच्छीलाः श्रिय उदधेः सकाशान्निरयन्निर्गच्छन्भास्वान्स एव स्वर्णस्योदकुम्भो जलपूर्णः कलशस्तं दिदृक्षुतां दर्शनेच्छुतां दधति धारयन्ति। कुमुदान्निर्गताः सत्यः कमलवनं प्रति गन्तुं सूर्योदयं प्रतीक्षन्त इत्यर्थः। जिगमिषवो हि जलपूर्णं कुम्भं दिदृक्षन्ते। प्रभातं जातमित्यर्थः। तस्मान्नित्यकर्मानुष्ठानार्थममोचनीयामप्येतां क्षणमात्रं मुञ्चेति भावः। रहेति 'रह त्यागे'। स्त्रितमां पूर्ववत्। स्तोकान्मुक्तैः, 'स्तोकान्तिक–' इति पञ्चमीसमासः। अत एव पञ्चमी। 'पञ्चम्याः स्तोकादिभ्यः' इत्यलुक्। निरयत्, 'इ गतौ' इत्यस्माच्छता। उदकुम्भः, 'एकहलादौ पूरयितव्ये–' इत्युदकस्योदादेशः। दिदृक्षुरित्युप्रत्ययान्तत्वात् 'न लोका–' इति षष्ठीनिषेधाद्द्वितीया, ('द्वितीया' इति) योगविभागात्समासः॥

**प्रथमककुभः पान्थत्वेन स्फुटेक्षितवृत्रहा-**
**ण्यनुपदमिह द्रक्ष्यन्ति त्वां महांसि महस्पतेः।**
**पटिमवहनादूहापोहक्षमाणि वितन्वता-**
**महह युवयोस्तावल्लक्ष्मीविवेचनचातुरीम्॥ २६॥**

प्रथमेति॥ हे राजन्, महस्पतेः सूर्यस्य महांसि तेजांसि प्रथमककुभः प्राच्याः पान्थत्वेन पथिकतया तेनैव मार्गेण गमनवशात्स्फुटं सविशेषमीक्षितो वृत्रहा यैस्तादृशानि सन्त्यनुपदमनन्तरं सविधमागत्य इह प्रासादे वर्तमानं त्वां द्रक्ष्यन्ति विलोकयि-

१ इदं च 'गम्यादीनामुपसंख्यानम्' इति वार्तिकविस्मरणमूलकम्।

ष्यन्ति । अनन्तरं पटिम्नोऽतितैक्ष्ण्यस्य, अथ च—प्रज्ञातिशयस्य, वहनाद्धारणादसतः प्रकाशादेः प्रकटीकरणमूहा, सतश्च तिमिरादेरपोहो निराकरणं, तयोः क्षमाणि समर्थानि सामान्यविशेषभावादिनिर्णयनिपुणानि तानि रवितेजांसि युवयोरिन्द्रनलयोस्तावतीनामनेकप्रकाराणां शोभासंपद्रूपाणां लक्ष्मीणां विवेचनचातुरीं तारतम्यविचारकौशलं वितन्वतां विस्तारयतु । अहह चित्रम् । अन्यत्रैवंविधस्य चातुर्यस्यादर्शनादाश्चर्यम् । इन्द्रोऽतिशयशोभासंपत्तिमान्नलो वेति संशये प्रथम(मिन्द्र)दर्शनादिन्द्रे शोभासंपत्तिमत्त्वसामान्यबुद्धिः, अनन्तरं च नलदर्शनान्नले शोभासंपत्तिमत्त्वविशेषबुद्धिरिति सामान्यापेक्षया विशेषस्य बलवत्तरत्वादुभयदर्शिभिः सूर्यकिरणैरिन्द्रापेक्षया शोभासंपत्तिभ्यां नल एवाधिक इति निर्णीयतामिति भावः । अन्योऽपि प्राज्ञ ऊहापोहक्षमः सामान्यविशेषभावादिचातुरीं तनोति । 'अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्' इत्यमरः । पटिमा पृथ्वादिः । ऊहा, स्त्रीत्वविवक्षायां 'गुरोश्च हलः' इत्यप्रत्ययः ॥

**अनतिशिथिले पुंभावेन प्रगल्भबलाः खलु**
**प्रसभमलयः पाथोजास्ये निविश्य निरित्वराः ।**
**किमपि मुखतः कृत्वानीतं वितीर्य सरोजिनी-**
**मधुरसमुषोयोगे जायां नवान्नमचीकरन् ॥ २७ ॥**

अनतीति ॥ हे राजन्, खलु यस्मात्पुंभावेन पौरुषेण प्रगल्भबला उत्कटशक्तयोऽतिधृष्टाः, अत एव—अनतिशिथिले विकासोन्मुखेऽत्यक्तकलिकाबन्धकाठिन्येऽपि पाथोजास्ये कमलमुखे मकरन्दग्रहणार्थं प्रसभं हठान्निविश्य प्रविश्य निरित्वरा निर्गमनशीला एवंभूता अलयो भ्रमराः किमपि कियद(मु)र्धं मुखतो मुखे कृत्वाऽऽनीतं किमप्यपूर्वरसं स्वादुतरं सरोजिनीमधुरसं कमलिनीमकरन्दरूपं रसमास्वाद्यं वस्तु उषोयोगे प्रभातकाले वितीर्य दत्त्वा नवान्नं नूतनमपूर्वम्, अथ च—प्रेमभरात्स्वयममुक्तमनुच्छिष्टम्, अन्नं जायां मधुकर्या अचीकरन्कारयामासुः । अविकसिते कठिने कमलेऽबलत्वात्प्रवेष्टुमशक्ता एता इति कृत्वा पौरुषेण स्वयं तत्र प्रविश्य मकरन्दं मुखे कृत्वा समानीय मधुकरीभ्यो दत्त्वा ताभिस्तद्भोजयामासुरित्यर्थः। किंचिदासन्नसौरप्रकाशत्वात्कमलानि विकासोन्मुखानि जातानीति भावः । अन्येनापि प्रातः शुभयोगे वान्नप्राशनं कार्यते । उषायोगेति पाठे—'विभावरी नक्तमुषा च शर्वरी–' इति हलायुधः । उषाया अर्थाद्दिनेन सह योगे । प्रातरित्यर्थः। निरित्वराः, 'इण्नश–' इति करपि तुक् । मुखतः कृत्वेति 'स्वाङ्गे तस्प्रत्यये' इति कृञः क्त्वा । जायाम्, 'हृक्रोः–' इति कर्मत्वम् । जाया इत्यपि पाठः ॥

**मिहिरकिरणाभोगं भोक्तुं प्रवृत्ततया पुरः**
**कलितचुलुकापोशानस्य ग्रहार्थमियं किमु ।**

इति विकसितेनैकेन प्राग्दलेन सरोजिनी
जनयति मतिं साक्षात्कर्तुर्जनस्य दिनोदये ॥ २८ ॥

मिहिरेति ॥ सरोजिनी कमलिनी दिनोदये प्रातःकाले प्रागन्यदलापेक्षया पूर्वविकसितेनैकेन दलेन पत्रेणोपलक्षिता साक्षात्कर्तुरात्मानं पश्यतो जनस्येति मतिं जनयति। इति किम्—इयं मिहिरस्य सूर्यस्य किरणानामाभोगं परिपूर्णतां भोक्तुमनुभवितुम्, अथच—भक्षयितुं प्रवृत्ततया कृतप्रारम्भतया हेतुभूतया पुरः भोजनादावन्ना(ल)ग्रामृतकरणार्थस्यापोशानस्यामृतोपस्तरणमन्त्रोदकस्य ग्रहार्थं कलितो बद्धश्चुलुकः प्रसृतिविशेषो यया एवंभूता किमु। 'भोजने प्रवृत्तेनापोशानक्रियापूर्वमादावन्ते च भोक्तव्यम्' इति स्मृतेः। अपोशानग्रहीता करकमले एकां कनिष्ठामङ्गुलिं प्रसारयति, अन्याश्च संकोचयतीति संप्रदायः। कमलविकाससमयो जातः, तस्मादुद्बुध्यस्वेति भावः॥

तटतरुखगश्रेणीसांराविणैरिव सांप्रतं
सरसि विगलन्निद्रामुद्राजनिष्ट सरोजिनी।
अधरसुधया मध्येमध्ये वधूमुखलब्धया
धयति मधुपः स्वादुंकारं मधूनि सरोरुहाम् ॥ २९ ॥

तटेति ॥ सांप्रतं सरसि सरोजिनी सरसस्तटे तरुषु वर्तमानानां खगश्रेणीनां सांराविणैर्मिलितैः कलकलशब्दैरिव विगलन्ती भ्रश्यन्ती निद्रेव मुद्रा कोरकबन्धो यस्याः यद्वा—विगलन्ती निद्रायाः संकोचस्य मुद्रा भङ्गी यस्याः, सा त्यक्तनिद्रा, उन्मीलितकमललोचनेवाजनिष्ट जाता। कलकलेन च निद्रितस्य निद्रापयाति। तथा—मधुपो भ्रमरः सरोरुहां मधूनि कमलमकरन्दान् वध्वा भ्रमर्या मुखाल्लब्धयाधरसुधया ओष्ठगतपीयूषेण मध्ये मध्ये स्वादुंकारं स्वादूनि माधुर्यातिशययुक्तानि कृत्वा धयति पिबति। कमलानि विकसितानि, भ्रमराश्च तन्मधूनि भ्रमर्यधरं च पिबन्तीत्यर्थः। मधुप इति साभिप्रायम्। मद्यपा अप्येतादृशा भवन्ति। समन्ताद्रावाः सांराविणानि 'अभिविधौ भाव इनुण्' इतीनुण्णन्तात्स्वार्थे 'अणिनुणः' इत्यण्। स्वादुंकारं, 'स्वादुमि णमुल्' मान्तत्वं च पूर्वस्य 'स्वादुमि' इति निर्देशात्॥

गतचरदिनस्यायुर्भ्रंशे दयादयसंकुच-
त्कमलमुकुलक्रोडान्नीडप्रवेशमुपेयुषाम्।
इह मधुलिहां भिन्नेष्वम्भोरुहेषु समायतां
सह सहचरैरालोक्यन्तेऽधुना मधुपारणाः ॥ ३० ॥

गतेति ॥ गतचरदिनस्यातीतानन्तरदिनस्यायुर्भ्रंशेऽवसानकाले सायंसमये दयाया उदयादिव संकुचतां म्लानानां कमलानां मुकुलानि कलिकास्तेषां क्रोडान्मध्याद्धेतो-

नीडेषु प्रवेशमुपेयुषां प्राप्तानाम्। मकरन्दास्वादलाम्पट्यात्सायंसंध्यासमयेऽपि कमलेषु स्थितानाम्, अनन्तरं च तेषु संकुचितेषु बहिर्निर्गन्तुमशक्तत्वात्संकुचत्कमलमर्मरूपेषु नीडेषु स्थितानामिति यावत्। 'क्रोडम्' इति पाठे विशिष्टकमलक्रोडमेव नीडप्रवेशं गतानाम्, अनन्तरं च रात्रावतीतायामिह प्रातःसंध्यासमये भिन्नेषु ईषद्विकसितेष्वम्भोरुहेषु समायतां स्थितानाम्। यद्वा—इह पूर्वदिनान्तसंकुचितेष्वीषदुन्मिषितेषु सत्सु सुखेन निर्गन्तुं शक्तत्वात्तेभ्यः सकाशादर्थान्नवीनकमलानि उद्दिश्य समागच्छताम्। मधुलिहामधुना सहचरैः पूर्वदिनान्ते कमलसंकोचात्पूर्वमेव कमलक्रोडान्निर्गतैः सहचरैः सहचरीभिश्च मित्रकलत्रादिभिः सह मधुना मकरन्देन कृत्वा पारणा उपोषितसंबन्धीनि भोजनान्यालोक्यन्ते। लोकैरिति शेषः। ये रात्रौ कमलबद्धास्ते तत्र मकरन्दाभावान्निर्बन्धवशाच्च कृतोपवासाः, अनिबद्धाः सहचरास्तु रात्रौ निद्रावशात्तद्वियोगाद्वा कृतोपवासाः, अतः सर्वेपि प्रातर्मिलित्वा विकसितकमलमधुना पारणां कुर्वन्तीत्यर्थः। पूर्वदिनान्ते संकुचितानि कमलानि प्रातः पुनः किंचिद्विकसितानीति प्रसिद्धम्। भ्रमराश्च मधु पिबन्ति, भूयान्समयो जातः, तस्मादुद्बुध्यस्वेत्यर्थः। अन्येपि कस्मिंश्चिन्महीयसि मृते बन्ध्वादौ वा निबद्धे कृपया संकुचितहर्षा भवन्ति। केचिच्च महागुरुनिपात उपवासं कुर्वाणा गृहमध्यं प्रविश्य दिनान्तरे ज्ञातिभिः सह भुञ्जते। 'ज्ञातिभिः सह भोक्तव्यमेतत्प्रेतेषु दुर्लभम्' इति शास्त्रार्थः सहचरपदेन सूचितः। निगडबद्धोऽपि कारागृहेषु भिन्नेषून्मोचितः समागच्छन्सन्स्वस्य बन्धनवशान्निराहारैर्ज्ञातिभिः सह मधुरैरन्नैः पारणां करोति। क्रोडादिति यथायथं हेतौ ल्यब्लोपे च पञ्चमी। समायताम्, इणः शता। सहचरैः, 'पुमान्स्त्रिया' इत्येकशेषः॥

**तिमिरविरहात्पाण्डूयन्ते दिशः कृशतारकाः**

**कमलहसितैः श्येनीवोन्नीयते सरसी न का।**

**शरणमिलितध्वान्तध्वंसिप्रभादरधारणा-**

**द्गगनशिखरं नीलत्येकं निजैरयशोभरैः॥ ३१॥**

तिमिरेति॥ प्राच्यादयो दिशस्तिमिरस्य विरहान्नाशात्पाण्डूयन्ते शुभ्रा इवाचरन्ति। अत एव—कृशा अप्रकाशा किंचिद्दृश्यास्तारकाः कतिपयनक्षत्राणि यासु। अन्यापि प्रियवियोगात्पाण्डुरा निमग्नातिकृशनेत्रकनीनिका च भवति। तथा—का सरसी कमलानां हसितैर्विकासैः कृत्वा श्येनीव श्वेतवर्णेव नोन्नीयते न लक्ष्यते, अपितु—सर्वा अपि सरस्यस्तैः शुभ्रायन्ते। अन्यापि प्रियप्राप्तेः कमलतुल्यमुखहसितैः श्वेता भवति। एकं गगनशिखरं गगनमध्यभागः शरणार्थं स्वपरित्राणार्थं गगनं प्रति मिलितस्य प्रत्यागतस्य ध्वान्तस्य ध्वंसिनी विनाशिनी या सूर्यप्रभा तस्या आदरधारणाद्धेतोर्निजैरयशोभरैः स्वीयैरकीर्तिसमूहैर्नीलति श्याम इवाचरति। अन्योपि शरणागतं परित्यज्य तद्वैरिणमादरेणाङ्गीकुर्वन्दुर्यशसा श्यामो भवति। दिशः सरांसि च प्रसेदुः, गगनं च नक्षत्राहार्यशोभापगमान्निजं नीलिमानं प्राप्तमिति भावः। पाण्डूयन्ते, उपमानादाचारेर्थे 'कर्तुः क्यङ्-' इति क्यङ्, 'अकृत्सार्वधातुकयोः-' इति दीर्घः। श्येनी, श्येतशब्दाद्वर्ण-

वाचिनो 'वर्णादनुदात्तात्–' इति ङीष् तस्य नश्च । नीलति, 'नील वर्णे' इति धातुः। आचारक्विबन्तान्नीलशब्दात्तिब्वा ॥

सरसिजवनान्युद्यत्पक्षार्यमाणि हसन्तु न
क्षतरुचिसुहृच्चन्द्रं तन्द्रामुपैतु न कैरवम् ।
हिमगिरिदृषद्दायादश्रि प्रतीतमदः स्मितं
कुमुदविपिनस्याथो पाथोरुहैर्निजनिद्रया ॥ ३२ ॥

सरसिजेति ॥ सरसिजवनानि न हसन्तु, अपि तु—विकसन्त्वेव । यद्यस्मादुद्यन्नुदित्वरः पक्षः सहायभूतः अर्यमा सूर्यो येषाम् । विकस्वराणीत्यर्थः । अथ च—यदि मित्रस्योदयो भवति, तदा सर्वोऽपि हर्षवशाद्विहसत्येव । तथा—कैरवं कुमुदं तन्द्रां संकोचं नोपैतु, अपि तु—प्राप्नोत्वेव । यतः—क्षतरुचिर्गतलक्ष्मीकः सुहृच्चन्द्रो यस्य तादृशम् । चन्द्रोदयविकासिनः कुमुदस्य चन्द्रक्षये संकोचो युक्त एवेत्यर्थः । अन्योऽपि सुहृत्क्षये मूर्च्छावशान्निमीलति । अथो अथवा पाथोरुहैर्विकसितकमलैः रात्रिसंबन्धिन्या निद्रया कृत्वा कुमुदवनस्यादः प्रत्यक्षदृश्यं स्मितं विकसितं प्रतीतं विनिमयेन गृहीतम् । किंभूतं स्मितम्—हिमगिरेर्हिमाचलस्य दृषदां शिलानां दायादांशभागिनी सदृशी श्री शोभा यस्य । शुभ्रतरमित्यर्थः । कमलानां रात्रौ निद्राभूत्, कुमुदानां विकासः । प्रातस्तु कमलानां विकासः, कुमुदानां च संकोचो दृश्यते, ततः स्वीयां निद्रां कुमुदेभ्यो दत्त्वा कमलैस्तद्विकासः परिवर्त्य गृहीत इति संभाव्यत इत्यर्थः। सूर्य उदितः, कमलानि विकसितानि, कुमुदानि च संकुचितानीति भावः । प्रतीतम्, प्रतिपूर्वादिणो निष्ठा । 'प्रतीष्टम्' इति च पाठः । अर्थः पूर्वोक्त एव ॥

धयतु नलिने माध्वीकं वा न वाभिनवागतः
कुमुदमकरन्दौघैः कुक्षिंभरिर्भ्रमरोत्करः ।
इह तु लिहते रात्रीतर्षं रथाङ्गविहंगमा
मधु निजवधूवक्त्राम्भोजेऽधुनाधरनामकम् ॥ ३३ ॥

धयत्विति ॥ अभिनवो नूतनः प्रभात आगतो भ्रमरोत्करो नलिने वर्तमानं माध्वीकं मकरन्दं धयतु पिबतु वा न वा । यतः—रात्रौ कुमुदमकरन्दौघैः कुक्षिंभरिः परिपूर्णोदर आकण्ठतृप्तः । रात्रौ कुमुदमकरन्दवृन्दैः पूरितोदरत्वात्प्रातर्मधु पिबतु वा मा पिबतु वा । न तत्रास्माकमाग्रह इत्यर्थः। अन्योऽप्याकण्ठतृप्तोऽतिथिर्भुङ्क्ते न वा, न तत्रादरः। रथाङ्गविहंगमास्तु रात्रीतर्षं सकलां रात्रिं तर्षित्वा वियुक्तत्वात्कुमुदमकरन्दं परित्यज्य पिपासयैव स्थित्वा इह प्रत्यक्षदृश्ये निजवधूवक्त्रलक्षणेऽम्भोजे वर्तमानमधरनामकमोष्ठसंज्ञं मधु अधुना प्रातःसमये लिहत आस्वादयन्ति । एतद्युक्तम् । तावतैव चाम्भोजस्यापि कृतार्थत्वं जातमित्यर्थः । अन्यत्रापि तृप्तापेक्षयोपोषितभोजनं युक्ततरं भवति ।

